# वाग्देव्याः उपासनम्

**न विद्यते यद्यपि पूर्ववासना-गुणानुबन्धि प्रतिभानमद्भुतम्।**
**श्रुतेन यत्नेन च वागुपासिता ध्रुवं करोत्येव कमप्यनुग्रहम्।।**

**– दण्डी**

"पूर्वजन्मनः आगतः संस्कारविशेषः एव प्रतिभा। सा यदि स्यात् तर्हि एव काव्यरचना सम्भवति इति तु सत्यम् एव। तदभावे काव्यरचनं सर्वथा असम्भवम् इति नास्ति। यत्नेन यदि वाग्देवी उपासिता स्यात् तर्हि सा प्रार्थयितारम् अवश्यम् अनुग्रहीष्यति। तदा सः काव्यादिकं रचयितुं शक्नोति" इति अभिप्रैति कविः दण्डी।

साहित्यशास्त्रे 'काव्यस्य किं कारणम्' इति विषये महती चर्चा प्रवृत्ता दृश्यते। प्रतिभा, काव्यादीनां परिशीलनम्, अभ्यासः इत्यादीनां सम्मिलितानां काव्यस्य कारणत्वम् इति मम्मटादयः विमर्शकाः वदन्ति। जगन्नाथादयः तु प्रतिभायाः केवलायाः कारणत्वम् अङ्गीकुर्वन्ति। अन्ये अन्यथा अपि वादम् उपस्थापयेयुः। सर्वेषां वादानाम् उदाहरणानि प्रत्युदाहरणानि च सन्ति एव।

प्रतिभायाः कारणत्वं तु निर्विवादास्पदम्। केवलप्रतिभावता लिखितं निर्दष्टं गुणान्वितं च भवति इति न। तादृशानां कृतिं दृष्ट्वा वयं वदामः– 'प्रतिभा तु अस्ति, किन्तु परिश्रमः अपर्याप्तः' इति। केचन पश्चिमे वयसि कृतिरचनाम् आरभन्ते, प्रसिद्धाः अपि भवन्ति। प्रायः तादृशानां प्रतिभा बाल्ये यौवने च सुप्ता भवति। अध्ययनादिकारणतः जीवनानुभवात् वा कदाचित् तेषु प्रतिभा उद्बुद्धा भवति।

प्रतिभा कदा उद्बुद्धा भवति इति कोऽपि न जानाति। अतः एव प्रतिभा कस्या व्यक्तौ अस्ति, कस्यां च नास्ति इति निर्णयः अपि दुष्करः एव। न जानीमो वयं, भवति/भवत्यां अपि प्रतिभा (उद्बुद्धा सुप्ता वा) स्यात्। अतः करोतु वाग्देव्याः उपासनाम्। येन केनापि प्रकारेण सा अनुग्रहीष्यति एव।

* *

# धात्वर्थविचारः

शिष्यः- श्रीमन्! 'श्रु-श्रवणे' इति धातुः (शृणोति) प्रथमे गणे अस्ति वा?

आचार्यः- आम्। पञ्चमे गणे अस्ति इति चिन्तितवान् वा भवान्?

शि - रूपसाम्यं दृष्ट्वा तथैव चिन्तितवान् आसम्। कस्मिंश्चित् पुस्तके लिखितम् आसीत् यत् श्रुधातुः प्रथमगणीयः इति। तदा ज्ञातवान् यत् श्रुधातुः प्रथमगणे अस्ति इति।

आ - अन्ये अपि केचन धातवः, कित (चिकित्सते), गुप (जुगुप्सते), तिज (तितिक्षते) इत्यादयः अपि अन्यगणीयाः इव भासमानाः प्रथमे गणे दृश्यन्ते।

शि - किमर्थम् एवं कृतं स्यात् पाणिनिना?

आ - किमपि विशेषप्रयोजनं मनसि कृत्य सः तथा योजितवान्। किन्तु न जाने, किं तत् विशेषप्रयोजनम् इति। अपवादरूपेण एतादृशाः केचन धातवः प्रथमगणे सन्ति इति एतावत् तु वक्तुं शक्यते।

शि - श्रीमन्! 'धातूनाम् अर्थनिर्देशः कृतः दृश्यते चेदपि व्यवहारं दृष्ट्वा एव प्रयोगः करणीयः' इति भवान् इतः पूर्वम् उक्तवान् खलु? तस्य उदाहरणम्?

आ - 'धावृ'धातुः गत्यर्थे शुद्ध्यर्थे च अस्ति। किन्तु लोके रूढिः तु गत्यर्थे एव। शुद्ध्यर्थे केवलस्य (उपसर्गरहितस्य) प्रयोगः न दृश्यते। अतः सीता वस्त्रं धावति इति न वक्तव्यम्।

'हन्'धातुः हिंसार्थे गत्यर्थे च अस्ति। तथापि रूढेः अभावात् गत्यर्थे तस्य प्रयोगः न करणीयः। अतः रामः गृहं हन्ति (गच्छति इत्यर्थे) इति प्रयोगः अनुचितः एव। एवं च प्राचीनैः अर्थे निर्दिष्टे अपि व्यवहारौचित्यं मनसि निधाय एव तत्तदर्थे धातोः प्रयोगः करणीयः भवति।

शि - 'धातवः अनेकार्थाः' इति वचनं श्रूयते। अनिर्दिष्टे अपि अर्थे धातुः प्रयुज्यंते

इत्यस्य किम् उदाहरणम्?

आ - अत्रापि बहूनि उदाहरणानि लभ्यन्ते। तत्रापि कृधातुः (करोति) आ+गम्लृधातुः (गच्छति) च अनिर्दिष्टेषु बहुषु अर्थेषु प्रयुज्यते। यथा – कृधातोः करणम् अर्थः खलु? तथापि अर्थान्तरेषु बहुधा प्रयोगः कृतः दृश्यते। यथा–

१) वितरति गुरुः ....... शक्तिं करोत्यपहन्ति वा – भवभूतिः (उत्पादयति इत्यर्थः)

२) काष्ठं भस्म करोति। (विकृतीकरोति इत्यर्थः)

३) अग्निं करोति। (प्रवर्तयति इत्यर्थः)

४) ब्रह्मणः प्रणवं कुर्यात्। (उच्चारणम् अर्थः)

५) कुरु पदानि घनोरु शनैः शनैः। (निक्षेपणम् अर्थः)

शि - श्रीमन्! गत्यर्थकानां सर्वेषां समानः अर्थः इति नास्ति खलु? 'गम्लृ-गतौ' (गच्छति), 'अट्-गतौ' (अटति), 'लघि-गतौ' (लङ्घते), 'प्लुङ्-गतौ' (प्लवते), इत्येवं रूपेण गत्यर्थकाः बहवः। तथापि तेषाम् अर्थभेदः तु अस्ति एव खलु?

आ - आम्। अर्थभेदः निश्चयेन अस्ति। विभिन्नाः गतिविशेषाः गतिशब्देन सूचिताः। अतः प्रयोगं दृष्ट्वा 'कस्य धातोः कीदृशी गतिः अर्थः?' इति ज्ञातव्यं भवति।

शि - एवं तर्हि धात्वर्थनिर्णये परमं प्रमाणं व्यवहारः एव।

आ - आम्। प्रामाणिकाः प्रयोगाः बहुधा परिशीलिताः चेत् धात्वर्थप्रपञ्चः ज्ञायते।

शि - उपसर्गयोगात् ये अर्थाः लभ्यन्ते ते अपि तस्यैव धातोः खलु अर्थाः?

आ - अविद्यमानं वस्तु कोऽपि दातुं न शक्नोति खलु? तथैव यदि सः अर्थः धातोः न स्यात् तर्हि उपसर्गयोगे सत्यपि तम् अर्थं प्रकाशयितुं स च धातुः सर्वथा न अशक्ष्यत्। अतः उपसर्गयोगात् लभ्यमानाः अर्थाः अपि धातोः एव इत्येव परिगण्यते।

* *



# चन्दमामा

सप्टम्बर्-१९८८

*

## अन्तरङ्गम्



*


प्रतिकृतिमूल्यं रू. २-५०

वार्षिकं ग्राहकशुल्कं रू. ३०-००




# चन्दमामा

संस्थापकः– 'चक्रपाणिः' सञ्चालकः– 'नागिरेड्डी'

सामाजिकान् संस्कृतं पाठयतां सर्वेषाम् समानः अनुभवः यत् सामाजिकेषु संस्कृतविषये परमश्रद्धा दृश्यते इति। शालासु ये छात्राः पठन्ति तेषु विशेषश्रद्धा स्फुटं न दृश्येत कदाचित्। यतः ते अन्यान्यपाठेषु व्यग्राः भवन्ति, अङ्कादीनां कामनया एव संस्कृतं पठन्ति वा। तथापि समग्रपरिशीलनेन एतावत् वक्तुं शक्यते यत् समग्रे देशे संस्कृतविषये महती श्रद्धा व्यापकतया दृश्यते इति।

एवं स्थिते अपि भारतस्य कस्मिन् अपि कोणे संस्कृतस्य स्थितिः तृप्त्यर्हा नास्ति, किमर्थम्? 'अस्माभिः आश्रियमाणः पाठ्यपद्धतिः, आयोज्यमानाः कार्यक्रमाः च न तथा जनप्रियाः' इत्येव उत्तरं वक्तव्यं भवति।

वयं चिन्तयामः – जनाः संस्कृतार्थम् अस्मत्समीपं स्वयम् आगच्छेयुः इति। किन्तु लोके इदानीं तावन्ति चिन्तभ्रामकाणि आकर्षणानि सन्ति यत् तेभ्यः आत्मनः रक्षणं महते कष्टाय जातम्। अहितकरेषु अपि तेषु रुचिं पश्यन्ति बहवः। एतस्मात् प्रबलात् जालात् कति वा जनाः आत्मानं विमोच्य संस्कृतसमीपम् आगच्छेयुः? अतः अस्माभिः अपि आकर्षकैः कालोचितैः उपायैः संस्कृतं जनसमीपं नेतव्यम्। संस्कृते रुचिः उत्पादनीया। जनेषु संस्कृतप्रीतिः सुप्ता अस्ति, न तु लुप्ता इति अंशं स्मरद्भिः अस्माभिः प्रयत्नशीलैः भवितव्यम्।

सम्पुटः–५ सप्टम्बर्–१९८८ सञ्चिका–६

प्रतिकृतिमूल्यं रू. २-५० * वार्षिकं ग्राहकशुल्कं रू. ३०-००




# मैगी क्लब में आओ – हर पल मौज मनाओ

मैगी क्लब का सदस्य बनने के लिए मैगी नूडल्स के 5 खाली पैकेटों के सामने वाले हिस्से से डिज़ाइन में छपे नाम 'Maggi 2- Minute Noodles' काटो और हमें भेज दो। तुम्हें आजीवन सदस्य बनाने के लिए हम तुम्हें एक सुन्दर मैगी क्लब सदस्यता बैज और सर्टिफ़िकेट भेजेंगे। साथ में नीचे लिखे उपहारों में से तुम्हारा मनपसंद कोई भी एक उपहार भी।

● मैगी स्कूल फ़न सैट (20 बुक लेबल और एक टाइम-टेबल) ● मैगी ट्रैफ़िक गेम ● चाइनीज़ चित्र-पहेली ● मैगी पोस्टर सेट ● डिज़्नी टुडे कॉमिक (हर बार नया अंक)

अगर चाहो तो पाँचों उपहार एक साथ ले सकते हो। लेकिन ध्यान रहे, हर उपहार के लिए 5 पैकेटों से 'Maggi 2-Minute Noodles' काटकर भेजना ज़रूरी हैं।

सिर्फ़ इतना ही नहीं! मैगी क्लब में हम समय-समय पर तुम्हारे लिए कई रोचक चीज़े पेश करते रहेंगे। इसलिए जल्दी करो और आज ही मैगी क्लब में शामिल हो जाओ।




**याद रखो:**

काटे हुए नामों को 60 पैसे के टिकट वाले लिफ़ाफे में डालकर एक कागज़ पर नीचे दिए विवरण के साथ हमें भेज दो :

नाम, पूरा पता, उम्र लड़का/लड़की,

कितने काटे हुए नाम भेजे हैं: कौन सा उपहार चाहिए:

अपना पत्र इस पते पर भेजो:

मैगी क्लब, पोस्ट बॉक्स नं. 5788, नई दिल्ली-110 055




HTA 6026HIN

# रसवार्ताः




## अतिमहान् समुद्रपक्षी!

तादृशाः समुद्रपक्षिणः पञ्चमिलियन्वर्षेभ्यः पूर्वम् एव अदृश्यतां गताः, येषां च पक्षौ १७ द्वादशाङ्गुलदीर्घौ, येषां भारः ९० फौण्ड्, ये च समुद्रस्य उपरि समुद्रतीरे च उड्डयमानाः तिष्ठन्ति स्म। तत्कालीनस्य एकस्य पक्षिणः अवशेषः अमेरिकादेशे प्राप्तः अस्ति। इदानीन्तस्य अतिमहतः समुद्रपक्षिणः(आल्बट्रास्) भारः तु केवलं २० फौण्ड्।

## वाताटनेन सह उड्डयनम्!

क्यालिफोर्नियाप्रदेशीया डीन् ड्रा नामिका बालिका उद्याने वाताटम् उड्डाययन्ती स्वयम् अपि उड्डयिता अभवत्। एतत् दृष्ट्वा तस्याः मातापितरौ दिग्भ्रान्तौ। ३० मीटर्मितम् उड्डयनस्य अनन्तरं सा पतितवती। सुदैववशात् सा किञ्चिदपि न व्रणिता। प्रवृत्तं तु एतावत् – डीन् ड्रा द्वारा उड्डायितस्य वाताटस्य सूत्रं आकाशात् अवतरति विमाने संलग्नम् अभवत्। सूत्रेण सह डीन् ड्रा अपि उपरि गता। ग्रहणशैथिल्यात् पतिता च।





## अज्ञातः वज्रदाता

वाषिङ्गटन् वस्तुसङ्ग्रहालयं प्रति प्रतिदिनम् असङ्ख्यानि पत्राणि वस्तुबन्धाः च आगच्छन्ति। एवम् आगते कस्मिंश्चित् वस्तुबन्धे अपूर्वं रक्तवर्णीयं वज्रम् आसीत्! समग्रे प्रपञ्चे एतादृशानि चत्वारि वज्राणि सन्ति इति श्रूयते। किन्तु तानि इदानीं कुत्र सन्ति इति न ज्ञायते। उपलब्धं रक्तवज्रं तु एतदेव, यस्य च मूल्यं कानिचन लक्षरूप्यकाणि!

## महिलामयम् आरक्षकस्थानकम्!

अलीगर्नगरे किञ्चन आरक्षकस्थानकं स्थापयिष्यते, यत्र च अनुचरतः आरभ्य निरीक्षकपर्यन्तं सर्वाः स्त्रियः एव भविष्यन्ति।



# जीवरक्षकम् असत्यम्

कदाचित् सुधर्मराजसमीपं कञ्चन युवकं बद्ध्वा आनीतवन्तः भटाः। भटानां कथनम् आसीत् यत् विदेशीयः एषः यात्रिकाणां धनम् अपहरन् एकं मारितवान् अपि इति।

राजा विचारणं कृत्वा तस्य मरणदण्डनं विहितवान्।

तस्य हस्तौ बद्ध्वा भटाः तं ततः नीतवन्तः। तदा सः किमपि उक्तवान्। किन्तु तेन प्रयुक्ता भाषा राज्ञा न ज्ञाता। तस्य कथनं ज्ञात्वा आगच्छतु इति मन्त्रिणम् आदिष्टवान् राजा।

"सः भवतः उत्तमं व्यवहारं श्लाघमानः अस्ति" इति उक्तवान् मन्त्री।

"एवं तर्हि तस्य मरणदण्डनं मास्तु। एकवर्षात्मकेन कारागारवासेन तं दण्डयन्तु" इति मन्दहासपूर्वकम् उक्तवान् राजा।

तदा सभासत्सु एकः उत्थाय– "प्रभो! सः भवतः निन्दनं कुर्वन् अस्ति, न तु श्लाघनम्। यतः अहं तस्य भाषां सम्यक् जानामि" इति उक्तवान्।

तदा राजा क्षणकालं मौनं स्थित्वा उक्तवान् – "भवता सत्यम् उक्तम्, उत मन्त्रिणा इति अहं न जानामि। मन्त्रिणा असत्यम् उक्तम् इत्येव भावयेम, तथापि तत् असत्यं जीवरक्षकम् अभवत्। भवता उक्तं सत्यं स्यात् चेदपि तत् जीवहानिकारकम् अस्ति। जीवनाशकस्य सत्यस्य अपेक्षया जीवरक्षकम् असत्यम् एव वरम्" इति।

सभासदः एतदङ्गीकारपूर्वकं हर्षध्वनिं प्रकटितवन्तः।





# विवेकप्राप्तिः

माणिक्यपुरस्य भूस्वामी महीधरः अत्यन्तं कार्यदक्षः। तस्य आकारः अपि अतीव रमणीयः आसीत्। तस्य आधीन्ये बहवः ग्रामाः आसन् अपि। अतः जनाः तं राजानम् इव पश्यन्ति स्म।

एकदा भूस्वामी सामान्यस्य कृषिकस्य वेषं धृत्वा साहाय्यकेन प्रबन्धकेन सह गृहात् प्रस्थितवान्। प्रबन्धकस्य अपि कृषिकवेषः एव आसीत्। ग्रामसञ्चारं कृत्वा जनानां योगक्षेमं द्रष्टव्यम् इति तयोः विचारः।

एवं सञ्चारसमये तौ कस्यचित् ग्रामस्य समीपे वृक्षशाखायां रज्जुं बध्नन्तं कञ्चन पुरुषं दृष्टवन्तौ। भूस्वामी झटिति तस्य समीपं गत्वा पृष्टवान् – "किं भोः? किम् आत्महत्यार्थम् उद्युक्तः भवान्? तादृशं कष्टं किम् आपतितम्? अथवा अन्यस्य साहाय्यार्थं भवान् एवं कुर्वन् अस्ति वा?" इति।

"एतादृशं साहाय्यम् अपि कोऽपि करोति वा? एतत् तु मम निमित्तम् एव" इति उत्तरं दत्तवान् सः पुरुषः।

"एवं वा? तादृशं दुरदृष्टं किम् आपतितम्? माम् अपि निवेदयतु किञ्चित्। अहं भवतः साहाय्यं कुर्याम्" इति उक्तवान् भूस्वामी।

"मम दुरदृष्टं किमिति वदेयम्? तत् निवारयितुं ब्रह्मा अपि प्रायः न शक्नुयात्। एषा रज्जुः एव शरणं मम। मम नाम सीतापतिः। याम् अहं बाल्यतः जानामि, यां च मनसा इष्टवान् सा जलजाक्षी मां परिणेतुं न इच्छति। सा वदति यत् अहं माणिक्यपुरस्य भूस्वामिनम् एव परिणेष्यामि इति। पितुः अन्यस्य हितैषिणः वा वचनम् अपि सा तिरस्कृतवती। इदानीं भवान् एव वदतु – एतां रज्जुं विना मम किम् अन्यत् शरणम्?"

"अनामिका"

इति खेदेन उक्तवान् सः पुरुषः।

तदा भूस्वामी आश्चर्यं प्रकटयन् पृष्टवान्– "एतावत् एव वा? प्रायः तस्याः मतिः भ्रष्टा स्यात्। अतः तथा व्यवहरति। वैद्यसाहाय्येन सा समीकरणीया। एतदर्थं किमर्थम् आत्महत्या करणीया?" इति।

"वैद्यः अपि तां समीकर्तुं न शक्नोति। सा बाल्यतः अपि भूस्वामिनः साहस-धैर्यादीनां विषये गुणातिशयविषये च श्रुतवती आसीत्। अतः एव इदानीं तम् एव परिणेतुं दृढं निश्चितवती। तया तिरस्कृतस्य मम जीवनेन किं प्रयोजनम्?" इति खेदेन उक्तवान् सः सीतापतिः।

भूस्वामी क्षणकालम् आलोच्य – "सः भूस्वामी मम आत्मीयः। तम् अहं वदामि। जलजाक्षी भवन्तम् एव यथा परिणयेत् तथा करोमि। किन्तु भवता ततः पूर्वम् 'आत्महत्याविचारं परित्यजामि' इति वचनं दातव्यम्" इति उक्त्वा सीतापतिना तथा वाचयित्वा च सीतापतिं ततः प्रेषितवान्।

अनन्तरं सः– "आवां तं ग्रामं गत्वा तां जलजाक्षीं पश्याम तावत्" इति वदन् प्रबन्धकेन सह प्रस्थितवान्।

यदा तौ तं ग्रामं प्राप्तवन्तौ तदा कुत्रचित् कस्यचित् गृहस्य पुरतः जनानां सम्मर्दं दृष्टवन्तौ। भूस्वामी कुतूहलेन समीपं गत्वा पृष्टवान् – "अत्र किमर्थम् एतावन्तः जनाः सम्मिलिताः सन्ति?" इति।

तदा समूहे स्थितः कश्चित् उक्तवान् – "एतस्य गृहस्य बालिका भूस्वामिनं परिणेतुम्



इष्टवती इति श्रुतम्। किन्तु गृहस्वामी तु सर्वथा निर्धनः। भूस्वामिनः कटाक्षपात्रं भवितुम् अपि तस्य अर्हता नास्ति। अतः सा कूपे पतनार्थम् उद्युक्ता आसीत्। तत्समये समीपस्थाः आगत्य तां प्राणापायतः रक्षितवन्तः" इति।

एतत् समग्रं प्रकरणं परिशीलयतः प्रबन्धकस्य मनसि जलजाक्ष्याः विषये करुणा उत्पन्ना। अतः सः भूस्वामिनं सूचितवान् – "वराकी सा तरुणी भवन्तं तावत् इच्छति खलु? अतः भवता सा कुतो वा न परिणेतव्या?" इति।

तदा भूस्वामी – "श्रीमन्! इदानीं मम एका पत्नी अस्ति एव। किम् एतावता न पर्याप्तम्? कृपया इतः परम् एतादृशीं सूचनां मा ददातु। सीतापति-जलजाक्ष्योः विवाहः केन उपायेन साधनीयः इति विषये चिन्तयतु तावत्" इति उक्तवान्।

अनन्तरं तौ जलजाक्ष्याः गृहस्य स्थानं सम्यक् ज्ञात्वा गृहं प्रतिगच्छन्तौ मार्गे चिन्तनं कृत्वा एकम् उपायं निश्चितवन्तौ।

सप्ताहानन्तरं भूस्वामिनः कौचन सेवकौ जलजाक्ष्याः गृहम् आगत्य – "अरण्ये मृगयासमये भूस्वामी नितरां व्रणितः अभवत्। तत्र आगतः वैद्यः सूचितवान् यत् इतः सञ्चारः अपायाय भवेत् इति। अस्मिन् ग्रामे समीचीनं विशालं गृहं तु भवताम् एव। अतः भवतां गृहे तस्य वसतिव्यवस्था कल्पिता चेत् वरम्। तत् प्रष्टुम् आवाम् आगतौ" इति उक्तवन्तौ।





तत् श्रुत्वा जलजाक्षी परमसन्तुष्टा सती – "एवं वा? तं शीघ्रम् एव अत्र आनयन्तु तावत्। अहं सर्वाः व्यवस्थाः कल्पयामि। न जाने, सः कीदृशीं वेदनाम् अनुभवन् स्यात् इति" इति उक्तवती।

भटौ वेगेन ततः प्रतिगतवन्तौ। किञ्चित्कलानन्तरं सेवकैः परिवृतः अश्वारूढः भूस्वामी जलजाक्ष्याः गृहम् आगत्य तदर्थं सज्जीकृते प्रकोष्ठे शयनं कृतवान्। जलजाक्षी समीपम् आगत्य अश्रूणि स्रावयन्ती – "भवन्तम् एतादृश्यां परिस्थितौ पश्यन्त्याः मम सङ्कटं किमिति वर्णयामि?" इति उक्तवती।

तद्दिने सा निद्राम् अपि परित्यज्य भूस्वामिनः पार्श्वे एव उपविश्य परिचर्यां कृतवती।

अनन्तरदिने सायङ्काले भूस्वामिनः सेवकाः महापात्रेषु मद्यम् आनीय भूस्वामिनः पार्श्वे स्थापितवन्तः। तानि पात्राणि दृष्ट्वा जलजाक्षी आश्चर्येण भूस्वामिनं पृष्टवती– "तेषु पात्रेषु किम् अस्ति?" इति।

"मनोविनोदजनकं मद्यम् अस्ति। तस्य सेवनं विना रात्रौ अहं निद्राम् एव न प्राप्नोमि" इति उक्तवान् भूस्वामी।

जलजाक्षी तत् श्रुत्वा जुगुप्सां प्रदर्शयन्ती किमपि वक्तुम् अशक्ता सती ततः अन्यत्र गतवती।

ततोऽपि किञ्चित्कालानन्तरम् उत्तमैः वेषभूषैः अलङ्कृताः त्रयः धनिकाः तत्र आगतवन्तः। सर्वे ते अक्षक्रीडायां मग्नाः जाताः। सुदीर्घकालं क्रीडनेन भूस्वामिनः धनं समग्रं समाप्तम्। सः तेभ्यः ऋणं स्वीकृत्य पुनः अपि क्रीडितवान्।

ते त्रयः धनिकाः क्रीडां समाप्य ततः निर्गतवन्तः। तदा भूस्वामिनः प्रबन्धकः – "श्रीमन्! एतावता प्रमाणेन मद्यसेवनम्, अक्षक्रीडायाम् एव धनस्य अपव्ययः इत्यादिकं न उचितम्। एतेन आरोग्यस्य हानिः। पित्रार्जिता सम्पत्तिः अपि अचिरात् एव समाप्ता भवेत्" इति खेदेन उक्तवान्।

"यावज्जीवं सुखं जीवेत्। सुखप्राप्त्यर्थम् एव एतत् जीवनम् अस्ति। अक्षक्रीडया अद्य

धनं गतं चेत् श्वः प्राप्येत अपि खलु? तदस्तु, अद्य क्रीडासन्दर्भे मया महत् ऋणं स्वीकृतम्। तत् त्वरया प्रत्यर्पणीयम्। इतः पूर्वं भैरवपुरस्य चत्वारः ग्रामाः विक्रीताः खलु? तत्समीपस्थान् पुनः दश ग्रामान् अपि विक्रीय धनम् आनयतु" इति सूचितवान् भूस्वामी।

अत्रान्तरे भूस्वामी महत्या हृदयवेदनया पीड्यमानः सन् आक्रन्दनं कृतवान्। सेवकाः झटिति गत्वा वैद्यम् आनीतवन्तः।

वैद्यः भूस्वामिनं सम्यक् परीक्ष्य किमपि औषधं पाययित्वा उक्तवान्– "श्रीमन्! भवतः आरोग्यं सर्वथा नष्टम् अस्ति। एतस्य समीकरणार्थं मासात्मकः औषधोपचारः करणीयः। तत्सन्दर्भे शय्यां परित्यज्य अन्यत्र सर्वथा न गन्तव्यम्। इदानीं तु मृगयासमये व्रणितः पादः सम्यक् जातः अस्ति। इतः परम् अत्र स्थातव्यं नास्ति" इति।

अल्पे एव काले भूस्वामिनः निर्गमनार्थं सन्नाहः आरब्धः। भूस्वामी गृहस्य पृष्ठतः कूपस्य पार्श्वे स्थितायाः जलजाक्ष्याः समीपं गत्वा उक्तवान् – "जलजाक्षि! भवत्याः सौन्दर्यम् अपूर्वम्। भवत्या मम सेवा या कृता तया अहम् अतीव सन्तुष्टः अस्मि। मम पादवेदना तु अपगता इव। गृहं गत्वा सर्वाः व्यवस्थाः कृत्वा वार्तां प्रेषयिष्यामि। भवती मां परिणेतुं तु सिद्धा एव अस्ति खलु?" इति।

तदा जलजाक्षी – "क्षाम्यतु श्रीमन्! पूर्वं भवान् परिणेतव्यः इति मया दृढनिश्चयः कृतः आसीत् इति तु सत्यम् एव। किन्तु सा भावना इदानीम् अपगता। स्त्री सदापि सद्गुणसम्पन्नं पतिम् इच्छति, न तु सकलदुर्गुणसम्पन्नम्। भवान् भूस्वामी स्यात् नाम। किन्तु भवतः अपेक्षया अपि मां प्राणसमां मन्यमानः सीतापतिः एव श्रेष्ठः। दूरतः पर्वतः रम्यः इति सत्यम् इदानीं मया अवगतम्" इति।

'मम उपायः फलितः' इति आलोच्य भूस्वामी सन्तोषेण ततः गतवान्। अनन्तरं केषुचित् एव दिनेषु सीतापति-जलजाक्ष्योः विवाहः सवैभवं सम्पन्नः।





# भारवहनम्

श्रीपादपुराग्रहारे परमेश्वरशास्त्री नाम कश्चन महापण्डितः निवसति स्म। तस्य समीपे अनेके धर्मशास्त्रग्रन्थाः आसन्। जाति-मत-कुलादि-भेदकारणतः लोके प्रचलतः कलहान्, युद्धं, मारणं, रक्तपातं च दृष्ट्वा सः अतीव खेदम् अनुभवति। अतः सः इतरमतानां सम्बन्धिनः ग्रन्थान् अपि आमूलाग्रं सूक्ष्मतया परिशीलितवान्।

एवं परिशीलनेन तेन एकम् अपूर्वं तत्त्वं ज्ञातं यत् किमपि मतं हिंसां न बोधयति इति। सर्वेषु मतेषु सर्वसमानता लोककल्याणप्राप्तिः च सम्यक् प्रतिपादिते आस्ताम्। एतेन परमेश्वरशास्त्री निश्चितवान् यत् सर्वाणि मतानि श्रेष्ठानि एव इति।

'एषः विषयः जनानां पुरतः उपन्यासादिभिः उपस्थापनीयः। जनानां मनस्सु ये सन्देहाः उत्पद्यन्ते ते तत्तन्मतस्य ग्रन्थानाम् उदाहरणैः एव निवारणीयाः' इति परमेश्वरशास्त्री निश्चितवान्।

एतदनुगुणं परमेश्वरशास्त्री कार्यम् आरब्धवान्। एकस्यां पेटिकायां सर्वमतसम्बन्धिनः प्रमुखग्रन्थान् अपि स्थापितवान्। तस्य वहनार्थं वीरेशनामकं कर्मकरं नियुज्य, तेन सह देशसञ्चारार्थम् उद्युक्तः जातः।

आरम्भदशायां परमेश्वरशास्त्रिणः उपन्यासस्य विषये जनाः विशेषतः अवधानं न दत्तवन्तः। किन्तु तत्तन्मतस्य ग्रन्थं स्थले एव प्रदर्श्य ग्रन्थस्थम् उदाहरणवाक्यम् अपि प्रदर्श्य सर्वेषाम् अपि मतानां सन्देहान् निवारयति इति यदा ज्ञातं तदा समाजे तस्य प्रभावः अवर्धत। अतः सर्वदिग्भ्यः अपि जनाः तम् आहूतवन्तः।

बहुत्र तेन सूचितेन परिहारेण जनाः अतीव

सन्तुष्टाः। प्रतिफलरूपेण तैः धनरूपेण वस्तुरूपेण च अनेकानि उपायनानि दत्तानि। एवं क्रमशः परमेश्वरशास्त्रिणः गौरवं धनं च अवर्धत।

कश्चित् भूस्वामी तु कदाचित् लक्षरूप्यकात्मकेन उपायनदानेन परमेश्वरशास्त्रिणं विशेषतः सत्कृतवान्।

परमेश्वरशास्त्रिणः ख्यातिः यथा देशे तथैव विदेशेषु अपि प्रसृता। सर्वे तस्य पाण्डित्यस्य प्रशंसां कुर्वन्ति। ऐश्वर्यं चापि वर्धते। किन्तु परमेश्वरशास्त्रिणः पुस्तकानां पेटिकां वहन् वीरेशः तु दिने दिने क्षीणः भवति। तस्य मुखं तु सदा कान्तिहीनं दृश्यते।

वीरेशः कीदृशेन रोगेण पीड्यमानः अस्ति अजानन् परमेश्वरशास्त्री तं चिकित्सालयं नीतवान्। वैद्यः वीरेशं सम्यक् परीक्ष्य एतस्य शारीरकः रोगः कोऽपि नास्ति इति सूचितवान्।

तत् श्रुत्वा परमेश्वरशास्त्री वीरेशम् उक्तवान् – "भवान् दिने दिने कृशः भवन् अस्ति। शारीरकरोगः तु कोऽपि नास्ति इति वैद्यः वदति। एवं तर्हि भवतः मनसि का व्यथा अस्ति? निस्सङ्कोचं वदतु तावत्" इति।

वीरेशः 'तादृशी व्यथा काऽपि नास्ति' इति उक्तवान्। किन्तु परमेश्वरशास्त्रिणा यदा अनुरोधपूर्वकं पुनः पुनः पृष्टं तदा सः उक्तवान् – "श्रीमन्! भवतः ग्रन्थान् सर्वान् अहं वहामि। किन्तु कीर्तिः धनं च भवतः। भारं वहतः मम विशेषलाभः कोऽपि नास्ति। एषा एव व्यथा मम" इति।



एतादृशी व्यथा वीरेशस्य मनसि स्यात् इति परमेश्वरशास्त्रिणा न तर्कितम् अपि आसीत्। सः आश्चर्यम् अनुभवन् वीरेशं विवेकं बोधयितुम् इच्छन् पृष्टवान् – "वीरेश! पुस्तकपेटिकां भवान् प्रतिदिनम् आनीय शकटे स्थापयति। पुनः शकटतः वेदिकापर्यन्तं नयति च। एवं च विचार्यमाणे, भवान् प्रतिदिनं घण्टाद्वयं केवलं पेटिकाभारं वहति, न ततोऽपि अधिकम्। सत्यं खलु?" इति।

"एतत् तु सत्यम् एव। किन्तु मया येषां ग्रन्थानां भारः उह्यते तेषाम् आधारेण एव खलु भवान् कीर्तिं धनं च सम्पादयति?" इति पृष्टवान् वीरेशः।

"पुस्तकानां कारणतः धनप्राप्तिः इति तु सत्यम् एव। तेषां पुस्तकानां भारं भवान् घण्टाद्वयं यावत् वहति। भारम् अपनेतुम् अपि भवतः अवकाशः अस्ति। किन्तु मम परिस्थितिं पश्यतु। पुस्तकस्थानां विषयाणां भारम् अहोरात्रं मम मस्तिष्केण वहामि खलु? निद्रासमये अपि स च भारः मम उपरि भवति एव। एवं तर्हि मम परिस्थितिः कीदृशी स्यात्?" इति।

यदा कदापि कस्य पुस्तकस्य कस्मिन् पृष्टे किम् अस्ति इति जानन् परमेश्वरशास्त्री झटिति सर्वम् उद्घाट्य पश्यति वदति च इति वीरेशः जानाति एव। अतः सः पश्चात्तापेन उक्तवान् – "श्रीमन्! मया मम दोषः ज्ञातः। मेधाविनः कर्मकरस्य च मध्ये महान् भेदः अस्ति। अविचिन्त्य यत् उक्तवान् तदर्थं मां क्षाम्यतु" इति।

परमेश्वरशास्त्री तद्दिने एव वीरेशस्य वेतनं वर्धितवान्। एतावदेव न, सर्वासु अपि सभासु वीरेशेन क्रियमाणं साहाय्यं प्रशंसापूर्वकं वदति स्म च।

वीरेशस्य मनोव्याधिः सर्वथा अपगतः। तदारभ्य सः शिरसा भारवहनसन्दर्भे मनसि एव भगवन्तं प्रार्थयते – "एतेषां पुस्तकानां बाह्यभारवहनकार्यं यजमानस्य कदापि मा भवतु" इति।





# सुवर्णखनी

## १

[अपूर्वं जलपातम् अतिक्रम्य विनोदस्य गमनानन्तरं सुवर्णखनीराज्यं कश्चन मान्त्रिकः आगतवान्। राज्ञः समक्षं कञ्चन भल्लूकं मनुष्यरूपेण परिवर्तितवान् अपि। 'एषः मान्त्रिकः सुवर्णमयीं विग्रहरूपिणीं स्त्रियं सजीवां कर्तुं शक्नोति' इति राजा विश्वसितवान्। 'विग्रहः सजीवः करणीयः चेत् भवता सप्ताहात्मकः उपवासः आचरणीयः' इति राजानं सूचितवान् मान्त्रिकः। राजा एतत् अङ्गीकृतवान्। तदनन्तरम् ......]

'वयम् अपि भवता सह उपवासम् आचरामः' इति मन्त्रिप्रभृतिभिः यत् उक्तं तेन राजा अतीव सन्तुष्टः। सः अनन्तरदिने मन्त्रिणः महाज्ञानिनः च आहूय – "भवताम् उपवासव्रताचरणं ममापि अनुमतम् एव। व्रतसमाप्तिपर्यन्तं भवद्भिः सर्वैः अत्रैव स्थातव्यम्" इति सूचयित्वा ते राजभवनात् बहिः यथा न गच्छेयुः तथा रक्षणव्यवस्थां कारितवान्।

एकदिनं यावत् उपवासव्रताचरणेन एव सर्वे श्रान्ताः। बुभुक्षा तान् नितरां बाधते। ते कथमपि श्रान्तिं निगृह्य स्थितवन्तः।

भोजनशालायां यथापूर्वं राजनिमित्तं निर्मितं भोजनं मान्त्रिकः सन्तोषेण आस्वादयति। तस्य भोजनानन्तरं यत् शिष्यते तत् तदीयः शिष्यः समापयति।

तृतीये दिने महाराजः अतीव निश्शक्तः जातः। चतुर्थे दिने सः दीर्घं निःश्वसन् 'हाँ हूँ'

"मनोजदासः"



इति वेदनां प्रकटयति। तदा मान्त्रिकः करुणालुः इव किञ्चित् फलरसं पातुम् अनुमतिं दत्तवान्। सः मान्त्रिकः राज्ञः पुरतः उपविश्य त्रिपुरसुन्दर्याः अप्सरसः परिणयेन कीदृशं भाग्यं प्राप्यते इति विषये सुदीर्घम् उपन्यासं करोति।

एतादृशं वर्णनं शृण्वन् राजा बुभुक्षां विस्मरति। "सुवर्णखनीप्रदेशो सुवर्णराशिः एव अस्ति। विग्रहरूपिणी सा स्त्री सजीवत्वं प्राप्य मां परिणेष्यति। सुवर्णनिक्षेपस्य प्राप्त्यर्थम् उपायं सूचयिष्यति च। तदा अहं तत्सर्वं वशीकरिष्यामि" इति कल्पनालोके विहरति महाराजः।

कथञ्चित् सप्ताहावधिकः उपवासः समाप्तः। अष्टमे दिने महाराजः शुद्धेन नवनीतेन शरीरं विलिप्य सुगन्धमयेन जलेन स्नानं कृतवान्। सेवकाः अमूल्यैः वस्त्रैः आभरणादिभिः च तम् अलङ्कृतवन्तः।

मान्त्रिकः महाज्ञानिनः मन्त्रिणः च आहूय उक्तवान् – "अहम् इदानीं महाराजं सुवर्णविग्रहसमीपस्थां गुहां प्रति नयामि। तत्रैव उपवासस्य पारंणविधिः भविष्यति। भवन्तः स्वस्वगृहं गत्वा यद्यत् इष्टं तत्सर्वं खादितुम् अर्हन्ति। अहं गुहां प्रविश्य ध्यानमग्नः भविष्यामि। तथा कियत्कालं तिष्ठेयम् इति अहम् एव न जानामि। एतत्सन्दर्भे केवलं महाराजः मम समीपम् आगन्तुम् अर्हति, न अन्यः। अन्यः मुख्यः विषयः यत् भवत्सु एकः अपि केनापि कारणेन महाराजसमीपं न आगच्छेत्। एषः विषयः कदापि न विस्मर्तव्यः। मया मन्त्रतन्त्रादयः प्रयुज्यन्ते। तत्समये भवत्सु कोऽपि आगच्छति चेत् व्रतहानिः भवत्येव। तेनैव सह आगतस्य आयुः अपि क्षीणं भविष्यति" इति।

किञ्चित्कालानन्तरं महाज्ञानिनः मन्त्रिणः च स्वस्वगृहं गतवन्तः। महाराजस्य तु दृढतया स्थातुम् अपि सामर्थ्यं नास्ति। कदा आहारः मुखे पतेत् इति सः प्रतीक्षमाणः अस्ति। भटाः मान्त्रिकस्य सूचनानुसारं महाराजं मञ्चे शाययित्वा मञ्चम् उन्नीय स्त्रीविग्रहसमीपं नीतवन्तः। मान्त्रिकस्य पार्श्वे मञ्चं स्थापयित्वा भटाः प्रत्यागतवन्तः।

राजानं पश्यन् मान्त्रिकः मन्दहासपूर्वकम्

उक्तवान् – "महाप्रभो! सुवर्णविग्रहमयी एषा स्त्री निधिनिक्षेप-रहस्यं जानाति इति मया मन्त्रबलात् ज्ञातम्। इतः परं किम्, एकदिनाभ्यन्तरे सजीवां तां भवान् परिणेष्यति" इति।

एतत् श्रुत्वा नवोत्साहं प्राप्य राजा सर्वां शक्तिं सङ्गृह्य पार्श्वे स्थितायाः गुहायाः समीपं गतवान्। राज्ञः अङ्गरक्षकाः मान्त्रिकस्य सूचनानुसारं पर्वतमूले एव स्थिताः आसन्।

"मान्त्रिकवर्य! मम तावती बुभुक्षा अस्ति यत् एतं स्त्रीविग्रहम् एव अहं खादितुं सिद्धः अस्मि। किन्तु तथा न करणीयं खलु? एषा परिणेतव्या अस्ति मया। एषा भक्ष्याणि खादयिष्यति" इति सन्तोषेण उक्तवान् राजा।

यावत् राजा मान्त्रिकः च गुहां न प्रविष्टवन्तौ ततः पूर्वम् एव केचन राजसेवकाः विविधान् भोजनपदार्थान् आनीय तत्र आगतवन्तः। मान्त्रिकशिष्यस्य सूचनानुसारं ते तानि पात्राणि एकत्र व्यवस्थितं संस्थाप्य प्रतिगतवन्तः। तानि भक्ष्याणि दृष्ट्वा महाराजः नितरां सन्तुष्टः। "अहो! भक्ष्याणि! इदानीम् अहम् एतानि खादितुम् अर्हामि खलु?" इति मान्त्रिकं पृष्टवान् राजा।

"त्वरा मास्तु महाराज! नवनीतप्राप्तिसमये घटच्छेदनं न उचितम्। व्रतस्य इव पारणविधेः अपि महत्त्वम् अस्ति। इदानीं सः विधिः एव कार्यते मया। तत्र





गुहाभित्तेः मध्ये एकं बिलं पश्यति खलु भवान्? शरीरम् अवनमय्य जानुनी भूमौ स्थापयन् नमस्कारभङ्ग्या भवान् बिलस्य अन्तः गच्छतु। तत्र गत्वा अहं यथा वदामि तथा आचरतु। तच्च अतीव सुलभम्। अनन्तरं भक्ष्यादीनां सेवनम्। ततश्च....." इति यावत् मान्त्रिकः वाक्यं न समापितवान् ततः पूर्वम् एव राजा उक्तवान् – "ततश्च तस्याः अप्सरसः परिणयः एव" इति।

"आम् आम्। प्रथमं भवान् वेषभूषादीन् अपनीय मया यथा उक्तं तथा बिलं प्रविशतु" इति सूचितवान् मान्त्रिकः।

"मया वस्त्रं किमर्थम् अपनेतव्यम्?" इति आश्चर्येण पृष्टवान् राजा।

"व्रतस्य एतत् एकम् अङ्गं महाराज! देवालये गर्भगृहप्रवेशसमये सर्वे अलङ्काराः निष्कास्यन्ते खलु? तथैव एतत् अपि। उत्तमः मुहूर्तः अतिक्रान्तः न भवेत्। त्वरया सर्वं करोतु। महाभाग्यस्य प्राप्त्यर्थम् अहं तु वस्त्राणि किं, चर्म समर्पणीयं चेदपि सिद्धः एव" इति उक्तवान् मान्त्रिकः।

राजा इदानीम् अनिवार्यतया अङ्गीकृतवान्। मान्त्रिकः शिष्यः च अग्रे आगत्य रत्नादिसहितानि आभरणानि, किरीटं, सुवर्णसूत्रमयानि वस्त्राणि च एकैकशः निष्कासितवन्तौ। अनन्तरं तौ महाराजं बलात् बिलस्य अन्तः नोदितवन्तौ।

"हा हन्त! घोरान्धकारः अत्र!" इति आक्रोशनं कृतवान् राजा।

"क्षणाभ्यन्तरे सर्वम् अभ्यस्तं भविष्यति, चिन्ता मास्तु" इति वदन् मान्त्रिकः राजानं पुनः अपि अग्रे नोदितवान्।

"कीदृशः क्रूरः क्रमः एषः! शीघ्रं समापयतु भवतः व्रतविधिम्" इति असमाधानेन उक्तवान् राजा।

राजानं बिलस्य अन्तः पूर्णतः नोदयित्वा मान्त्रिकः स्वकीयं कृतकं श्मश्रु निष्कास्य राज्ञः वस्त्राणि आभरणानि च स्वयं धृत्वा किरीटं चापि शिरसि संस्थाप्य – "एतावता मम पूजाविधिः समाप्तः" इति वदन् अट्टहासं कृतवान्।

"कोऽयम् अट्टहासः! अहं बुभुक्षया म्रियमाणः अस्मि अत्र। भक्ष्यस्थालिकां मम

समीपे स्थापयतु भोः" इति उच्चैः उक्तवान् राजा।

मान्त्रिकः बिलस्य समीपं गत्वा अन्तः दृष्टिं प्रसारितवान्। तस्य वेषभूषादिकं दृष्ट्वा आश्चर्येण कोपेन च महाराजः पृष्टवान् – "कः भवान्?" इति।

अहं चण्डप्रचण्डमहाराजः इति एतावत् अपि न जानाति वा मूर्ख!" इति उक्तवान् मान्त्रिकः।

"निरर्थकं किमर्थं प्रलपति? भवान् एव चण्डप्रचण्डमहाराजः चेत् अहं कः?" इति पृष्टवान् राजा।

"भवान् कश्चन मान्त्रिकः स्यात्" इति उक्तवान् राजवेषेण स्थितः मान्त्रिकः।

"अहं मन्त्रतन्त्रादिकं किमपि न जानामि। यदि जानीयां तर्हि एताः शिलाः लड्डुकरूपेण परिवर्त्य खादेयम्" इति उक्तवान् राजा।

"प्रायः सर्वं विस्मृतं स्यात्। राजभवने स्थितायाः निधिसुवर्णाभरणादीनां पेटिकायाः कुञ्चिका कुत्र स्थापिता इति मया यथा विस्मृतं तथैव भवता अपि मन्त्रतन्त्रादिकं विस्मृतं स्यात्। कुञ्चिका कुत्र स्थापिता इति भवान् जानाति चेत् वदतु। तदा भक्ष्यमयीं स्थालिकां भवतः पुरतः स्थापयिष्यामि" इति उक्तवान् मान्त्रिकः।

"अहं तत् सर्वथा न वदामि। भवतः कुटिलोपायः मया ज्ञातः। मां चलितुम् अपि अशक्तं कृत्वा कुटिलोपायेन बिलस्य अन्तः



नोदयन् भवान् विश्वासद्रोहं कृतवान्। वञ्चकः पापी भवान्" इति क्रोधेन आक्रोशनं कृतवान् राजा।

शिष्यः भक्ष्यमयीम् एकां स्थालिकाम् उन्नीतवान्। राजवेषेण स्थितः मान्त्रिकः ततः एकं भक्ष्यं स्वीकृत्य खादितुम् उद्युक्तः जातः।

"मम भोजनं मह्यं ददातु भोः!" इति कोपेन उक्तवान् राजा। मान्त्रिकः महाराजाय एकं लड्डुकं दत्त्वा – "यावत् भवान् धनपेटिकायाः कुञ्चिका कुत्र अस्ति इति न वदति तावत् प्रतिदिनम् एकलड्डुकमात्रं दीयते भवते" इति उक्तवान् मान्त्रिकः।

"कुञ्चिकास्थानं यदि न वदेयं तर्हि आहारम् एव अदत्त्वा मां मारयितुम् इच्छति खलु भवान्! अहं मूर्खः संवृत्तः" इति



गद्गदस्वरेण वदन् लड्डुकं खादितुम् उद्युक्तः जातः राजा।

* * * *

अपूर्वस्य कलिङ्गफलस्य पतनानन्तरं चिन्ताग्रस्तान् जनान् तथैव परित्यज्य विनोदः मुनीश्वरः च अरण्यं प्रविष्टवन्तौ।

"तत्र पश्यतु! दिगन्ते नीलवर्णीयाः पर्वताः दृश्यन्ते खलु? तत्र गमनम् अतीव दुष्करम्। किन्तु भवता प्रयाणस्य उद्देशः साधनीयः चेत्, विग्रहोज्जीवनरहस्यं ज्ञातव्यम् एव चेत् तान् पर्वतान् अतिक्रम्य गन्तव्यम् एव" इति विनोदम् उक्तवान् मुनीश्वः।

"अदृश्यताप्राप्तिरहस्यम् अहं जानामि एव। ज्ञानभूमिराजः तं रहस्यं मां बोधितवान्। तदाधारेण अहम् अदृश्यतां प्राप्य तान् पर्वतान् अतिक्रम्य गच्छेयम्" इति उक्तवान् विनोदः।

"तथा न शक्यते। भवता ज्ञाता विद्या केवलं मानवलोके फलं ददाति। भवता प्रवेष्टव्यं स्थलं तु न मानवप्रपञ्चः। तत्रत्याः मनुष्याः इव दृश्यन्ते चेदपि ते न अस्मादृशाः" इति उक्तवान् मुनिः।

"एवं तर्हि पादक्रमणेन एव गमिष्यामि" इति विश्वासेन उक्तवान् विनोदः।

"तथा चिन्तनं न व्यावहारिकम्। आजीवनं गमनेन अपि अरण्यक्रमणं न समाप्येत। अतः सकुशलं तत्र गमनार्थं रहस्यमार्गः एव अनुसरणीयः" इति सूचितवान् मुनिः।

"श्रीमन्! एतादृशे सन्दर्भे भवन्तं विना न अन्या गतिः। भवन्तं शरणं गतवान् अस्मि। कृपया मां तत्र प्रापयतु" इति सविनयं नमस्कारं कृतवान् विनोदः।

"तथैव अस्तु" इति वदन् मन्दहासं प्रकटयन् मुनिः विनोदेन सह पर्वतदिशि प्रस्थितवान्।

किञ्चित्कालानन्तरं विनोदः गच्छन् एव आत्मविस्मृतिं प्राप्तवान् इव। पक्षी इव पक्षौ प्रसार्य आकाशे उड्डयनं कुर्वन् अस्मि वा इति अनुभवं प्राप्तवान् सः। मनसि कोऽपि विकल्पः न आसीत्। शान्तः सागरः इव आसीत् तदीयं मनः। निद्रासुखम् अनुभवन् सः

नेत्रे निमीलितवान्।

एतादृशी स्थितिः कियत्पर्यन्तम् आसीत् इति विनोदः न जानाति। स्वपृष्ठभागे केनचित् क्रियमाणस्य हस्तचालनस्य अनुभवं प्राप्य सः नेत्रे उन्मीलितवान्।

सः इदानीं मुनीश्वरस्य पार्श्वे कस्याश्चित् शिलायाः उपरि उपविष्टः अस्ति। आकाशः अरुणवर्णतां प्राप्य सूर्योदयं सूचयन् आसीत्। मेघाः तु कार्पासराशिः इव, समुद्रस्य फेनः इव आकाशे मनोहरतया सञ्चरन्तः आसन्।

पर्वतस्य मूलप्रदेशे अनेके वृक्षाः दृश्यन्ते स्म। तेषां वृक्षाणां काण्डाः तालवृक्षस्य इव दृश्यन्ते स्म। शाखाः, उपशाखाः च वृक्षेषु न दृश्यन्ते। वृक्षाणां शिखरभागाः मेघानां मध्ये गताः आसन्।

"कोऽयं प्रदेशः एषः? एतादृशाः उन्नताः वृक्षाः मया इतः पूर्वं कदापि न दृष्टाः, श्रुताः वा!" इति उक्तवान् विनोदः आश्चर्येण।

"एते वृक्षाः सदा एवम् एव उन्नताः न भवन्ति। प्रातः किञ्चित्कालम् एवं तिष्ठन्ति। आकाशे स्थिताः देवकुमाराः एतेषां वृक्षाणां फलानां स्वीकरणे सौलभ्यं यथा भवेत् तथा एते वर्धन्ते" इति विवरणं दत्तवान् मुनिः।

विनोदः पुनः अपि वृक्षाणाम् उपरि दृष्टिं स्थापितवान्। ते वृक्षाः क्रमशः ह्रस्वीभवन्तः सामान्यम् औन्नत्यं प्राप्य फल-शाखादिभिः शोभमानाः अभवन्। "अपूर्वः अद्भुतप्रपञ्चः एषः!" इति उद्गारं प्रकटितवान् विनोदः।

"वयम् इदानीं मानवलोकस्य सीमायां स्मः। अत्र विशिष्टया रीत्या जीवनं यापयन्तः जनाः दृश्यन्ते। अचिरात् एव तादृशेषु कांश्चन भवान् द्रष्टुम् अपि अर्हति" इति उक्तवान् मुनिः।

अत्रान्तरे 'कीच्' इति कश्चन ध्वनिः श्रुतः। विनोदः पृष्ठतः परिवृत्य अधः दृष्टिं प्रसारितवान्। तत्र दृश्यमानं दृश्यं दृष्ट्वा सः आश्चर्येण स्तब्धः अभवत्।

– (अनुवर्तते)






# नन्दिनीदेवी

यावत् उत्तरकथनं समाप्तं तावता एव अदृश्यतां गतवन्तं वेतालं पुनः अपि आनेतुं त्रिविक्रमः वृक्षस्य समीपं गतवान्। वृक्षम् आरुह्य शवं स्कन्धे आरोप्य अधः आगतवान्। ततः मौनं श्मशानाभिमुखं प्रस्थितवान्। तदा शवान्तर्गतः वेतालः अवदत् – "अये राजन्! स्वीकृतं कार्यं सफलीकरणीयम् एव इति दृढं सङ्कल्पं कृत्वा मध्यरात्रे श्मशानस्य भीकरताम् अविगणय्य यत् अग्रे गच्छन् अस्ति तत् दृष्टवतः मम महत् आश्चर्यम्! अविरतेन प्रयत्नेन कार्यं सेत्स्यति एव इति तु सत्यम् एव। किन्तु केचन फलप्राप्तिसमये मनोदौर्बल्यतः कारणान्तरेण वा स्वयम् एव प्रयत्नं परित्यजन्ति। अत्र उदाहरणरूपेण विक्रमसिंहस्य कथां श्रावयामि। कथां शृण्वतः गच्छतः भवतः मार्गायासः अपि परिहृतः भवेत्" इति।

अनन्तरं वेतालेन कथा प्रारब्धा –

## वेतालकथा



अश्वपुर्याः युवराज्ञी नन्दिनीदेवी सौन्दर्यखनी आसीत्। तां परिणेतुं बहवः युवराजाः प्रयत्नपराः आसन्। किन्तु नन्दिनीदेवी तु विजयपुरस्य युवराजं वसन्तसेनं परिणेतुम् इच्छति। यतः वसन्तसेनः अतीव सुन्दरः पुरुषः, परमसाहसी, अप्रतिमशूरः च आसीत्।

नन्दिनीदेवी कदाचित् स्वपितरं कीर्तिकान्तं विचारं निवेदितवती। एतत् श्रुतवतः कीर्तिकान्तस्य चिन्ता आरब्धा। 'नन्दिनीदेवीं परिणेतुं बहवः राजकुमाराः अहमहमिकया उत्साहिनः सन्ति। बहुषु समर्थेषु राजकुमारेषु सत्सु नन्दिनीदेवी लघुराज्यस्य विजयपुरस्य युवराजं यदि परिणयेत् तर्हि इतरे युवराजाः कुपिताः सन्तः युद्धार्थम् आगच्छेयुः। एतादृश्याः परिस्थितेः स्वागतीकरणापेक्षया नन्दिनीदेव्याः स्वयंवरोद्घोषणं वरम्' इति आलोचितवान् कीर्तिकान्तः।

एतेषु एव दिनेषु कदाचित् नन्दिनीदेवी रथम् आरुह्य वनविहारार्थं प्रस्थितवती। यावत् तस्याः सख्यः रथं न आरूढवत्यः ततः पूर्वम् एव पार्श्वस्थायाः गजशालातः गजानां घीङ्कारः श्रुतः। एतत् श्रुत्वा भीतौ रथाश्वौ रथम् आकर्षन्तौ उद्भ्रान्तौ इव महता वेगेन धावन्तौ किञ्चन गहनारण्यं प्रविष्टवन्तौ।

तस्मिन् अरण्ये प्रतापः नाम महाचोरः निवसति स्म। सः नन्दिनीदेव्याः रथस्य समीपम् आगत्य रथं धैर्येण स्थगयित्वा दिग्भ्रान्तां नन्दिनीदेवीं रथात् अवतारितवान्।

नन्दिनीदेवी कृतज्ञतावचनानि वदन्ती– "कः भवान्? गहने अस्मिन् अरण्ये कथं वा उपस्थितः अभवत्?" इति पृष्टवती।

तदा प्रतापः उक्तवान् – "सुन्दरि! मम नाम प्रतापः इति। चौर्यं मम वृत्तिः। भवत्याः सौन्दर्यं मां मन्त्रमुग्धम् अकरोत्। भवतीं यदि परिणयेयं तर्हि मम जीवनं सार्थकं भवेत्। चौर्यवृत्तिं परित्यज्य सन्मार्गेण जीवितुम् अहं सिद्धः अस्मि। किं भवती मां पतित्वेन अङ्गीकर्तुं सिद्धा?" इति।

तत् वचनं श्रुत्वा नन्दिनीदेवी आश्चर्यं प्रकटयन्ती उक्तवती– "अहम् अश्वपुर्याः

युवराज्ञी। भवन्तं परिणेतुम् अहं न सिद्धा। यतः एतावता एव अहम् अन्यं मनसा वृतवती अस्मि। यदि भवान् इच्छेत् तर्हि अहं मम सर्वाणि आभरणानि सन्तोषेण दास्यामि। तानि स्वीकृत्य भवान् स्वमार्गम् अनुसरतु कृपया'' इति।

एतत् श्रुत्वा प्रतापः अत्यन्तविनयेन उक्तवान् – ''युवराज्ञि! भवतीं सकुशलं राजधानीं प्रापयिष्यामि। निश्शङ्कं माम् अनुसरतु'' इति।

सन्तुष्टा नन्दिनीदेवी प्रतापम् अनुसृत्य रथं चालितवती। किञ्चिद्दूरं गमनानन्तरं कर्णकठोरः कश्चन घोरः शब्दः श्रुतः। तत् श्रुत्वा नन्दिनीदेवी दिग्भ्रान्ता। महाचोरः प्रतापः तु क्षणमात्रेण पलायनसूत्रं पठितवान्।

क्षणकालानन्तरं लम्बकर्णः नाम राक्षसः सशब्दं पादं स्थापयन् नन्दिनीदेव्याः समीपम् आगत्य– ''अहो! अहो अपूर्वं सौन्दर्यम्! एतत् दृष्टवतः राक्षसस्य मम बुद्धिः विगतप्रभा जाता अस्ति'' इति उक्तवान्।

तदा नन्दिनीदेवी धैर्येण उक्तवती – ''अहम् अश्वपुर्याः युवराज्ञी। दुरदृष्टवशात् एकाकितया एतत् घोरारण्यं प्रविष्टवती अस्मि'' इति।

''भवत्याः दुरदृष्टं मम भाग्यदायकम् अभवत्। युवराज्ञि! अहं भवतीं परिणेष्यामि। मम भीकरम् आकारं दृष्ट्वा भीता मा भवतु। कामरूपधारणशक्तिः मम अस्ति। तदाधारेण सुन्दरं रूपं धर्तुं शक्नोमि। भवती यदि मां परिणयेत् तर्हि समीपस्थानि सर्वाणि





राज्यानि जित्वा भवतीं महाराज्ञीं करिष्यामि" इति वदन् राक्षसः सुन्दरं रूपं धृत्वा स्थितवान्।

"राक्षसेश्वर! क्षाम्यतु माम्। अहं भवन्तं परिणेतुं न इच्छामि। मम मनः एतावता एव अन्यस्मिन् संलग्नम् अस्ति। यदि इच्छति, भवान् मां मारयित्वा खादितुम् अर्हति" इति उक्तवती नन्दिनीदेवी।

तदा राक्षसः खेदेन उक्तवान् – "भवती मां परिणेतुं न इच्छति यत् तत् मम दौर्भाग्यम्। अस्तु तावत्, किन्तु सुन्दरीं भवतीम् अहं मारयितुं न इच्छामि" इति।

नन्दिनीदेवी ततः अग्रे गतवती। किञ्चिद्दूरं गमनानन्तरं सा एकं कुटीरं दृष्टवती। कुटीरस्य पुरतः वृक्षस्य अधः गोवर्धनो नाम संन्यासी नेत्रे निमील्य ध्याने निमग्नः आसीत्। नन्दिनीदेवी तस्य पुरतः मौनं स्थितवती।

किञ्चित्कालानन्तरं गोवर्धनः नेत्रे उन्मील्य नन्दिनीदेवीं दृष्टवान्। अपूर्वं सौन्दर्यराशिं दृष्टवतः तस्य परमाश्चर्यम्। सः नन्दिनीदेवीं पृष्टवान्– "सुन्दराङ्गि! भवती का? अत्र कथम् आगता?" इति।

तदा नन्दिनीदेवी आत्मनः परिचयम्, आगमनकारणं च विस्तरेण निवेद्य प्रार्थितवती– "मां राजधानीं प्रापयतु कृपया" इति।

"युवराज्ञि! अहम् अवन्तिकायाः राजा गोवर्धनः। जीवने विरक्तः सन् एवं संन्यासजीवनम् आचरन् अस्मि। भवतीं दृष्टवति मयि कौटुम्बिकजीवनविषये मोहः उत्पन्नः। भवती यदि अङ्गीकुर्यात् तर्हि भवतीं परिणेतुं सिद्धः अहम्। राज्याधिपत्यं तु मदधीनम् अस्ति एव। भवती महाराज्ञी भूत्वा सुखसागरे निमज्जितुम् अर्हति। अतः मम परिणयः अनुमतः खलु? किं वदति भवती?" इति पृष्टवान् गोवर्धनः।

तदा नन्दिनीदेवी उक्तवती– "श्रीमन्! भवतः अपेक्षां पूरयितुम् अहं न शक्नोमि। यतः मया मनसा वृतः अन्यः एव अस्ति। यदि अनिवार्यता आपतेत् तर्हि संन्यासं वा स्वीकुर्यां, किन्तु भवन्तं न परिणयेयम्" इति।

"क्षाम्यतु युवराज्ञि! अद्य अत्रैव

विश्रान्तिसुखम् अनुभवतु। श्वः भवतीं राजधानीं प्रापयिष्यामि'' इति उक्तवान् गोवर्धनः।

अत्रान्तरे अश्वस्य खुरपुटध्वनिः श्रुतः। अमूल्यैः वेषभूषैः अलङ्कृतः कश्चन युवकः तत्र आगत्य अश्वात् अवतीर्य नमस्कारपूर्वकं गोवर्धनं पृष्टवान्— ''श्रीमन्! अहं चन्द्रिकापुरस्य राजा विक्रमसिंहः। मृगयाकारणतः अतीव श्रान्तः अस्मि। किञ्चित् जलं ददाति वा?'' इति।

एवं वदन् विक्रमसिंहः नन्दिनीदेवीं दृष्टवान्। आश्चर्येण तां पृष्टवान् च— ''भवती अश्वपुर्याः युवराज्ञी नन्दिनीदेवी खलु?'' इति।

नन्दिनीदेवी अङ्गीकारपूर्वकं शिरः चालितवती। तदा विक्रमसिंहः सन्तोषातिरेकेण— ''भवतीम् अकस्मात् यत् पश्यन् अस्मि तत् मम सौभाग्यम् इति भावयामि'' इति उक्त्वा ''भवती कथम् अत्र आगता?'' इति पृष्टवान्।

नन्दिनीदेवी प्रवृत्तं विस्तरेण निवेदितवती। तदा विक्रमसिंहः— ''भवतीं राजधानीं सकुशलं प्रापयिष्यामि'' इति नन्दिनीदेवीम् उक्त्वा गोवर्धनेन आनीतं जलं पीतवान्। ''श्रीमन्! एताम् एतस्याः राजधानीं प्रापयिष्यामि'' इति गोवर्धनम् उक्त्वा नन्दिनीदेवीं स्वकीयस्य अश्वस्य उपरि आरोप्य स्वराजधानीं प्रति प्रस्थितवान्।

विक्रमसिंहः नन्दिनीदेवीम् एकस्य भवनस्य अन्तः नीत्वा चित्रपटस्य पुरतः





स्थापितवान्। तत्र नन्दिनीदेव्याः एव पुरुषप्रमाणकं चित्रम् आसीत्। एतत् दृष्ट्वा नन्दिनीदेवी आश्चर्यम् अनुभूतवती।

तदा विक्रमसिंहः— "नन्दिनीदेवि! भवती परिणेतव्या इति इच्छा मयि बहोः कालतः अस्ति एव। एतद्विषये भवत्याः पित्रे पत्रं लिखितवान् अस्मि अपि। भवती माम् अङ्गीकरोति चेत् वरम्। अन्यथा युद्धे भवत्याः पितरं पराजित्य वा भवतीं परिणेष्यामि एव" इति दर्पेण उक्तवान्।

तदा नन्दिनीदेवी शान्तेन स्वरेण उक्तवती— "महाराज! विवाहविषये अनुरोधः मास्तु। अहम् एतावता एव विजयपुरस्य युवराजं वसन्तसेनं मनसा वृतवती अस्मि।" इति।

एतत् वचनं श्रुत्वा विक्रमसिंहः कोपोद्रेकेण— "नन्दिनीदेवि! भवतीं न त्यजामि। राक्षसविधिना वा भवतीं बलात् परिणेष्यामि एव" इति उक्तवान्।

तदा नन्दिनीदेवी उच्चस्वरेण हसितुम् आरब्धवती।

विक्रमसिंहः आश्चर्येण तां पृष्टवान्— "किमर्थं हासः? किं प्रवृत्तम्?" इति।

"हासकारणं भवता ज्ञातव्यं नास्ति। मां बलात् परिणेतुं सिद्धः खलु भवान्? तर्हि ततः पूर्वं भवता एकं कार्यं करणीयम्। तच्च — अरण्ये मया दृष्टाः महाचोरः प्रतापः, राक्षसः, गोवर्धनः च भवता अत्र आनाययितव्याः। चोरं प्रतापं, राक्षसं लम्बकर्णं च विशेषरूपेण सत्कृत्य गोवर्धनः कठोररूपेण दण्डनीयः। तदनन्तरं भवान् मां परिणयतु नाम" इति उक्तवती नन्दिनीदेवी।

विक्रमसिंहः क्षणकालं यावत् मौनं स्थित्वा, ततः लज्जया शिरः अवनमय्य— "नन्दिनीदेवि! अहं क्षन्तव्यः। भवत्याः राजधानीं प्रति गमनार्थं विशेषव्यवस्थां कारयिष्यामि" इति उक्तवान्।

अनन्तरं विक्रमसिंहः नन्दिनीदेव्यै अमूल्यानि उपायनानि दत्त्वा तां रथे आरोप्य सकुशलं राजधानीं प्रेषितवान्।

वेतालः एवं कथां समाप्य अवदत्— "अये राजन्! महाचोरः राक्षसः च सम्माननीयौ, संन्यासी गोवर्धनः कठोरं दण्डनीयः च इति

नन्दिनीदेवी विक्रमसिंहं किमर्थम् उक्तवती? चिरकालात् प्रतीक्षिता युवराज्ञी हस्तगता चेदपि विक्रमसिंहः तां किमर्थं परित्यक्तवान्? किं सः भीरुः? उत तस्य मनोदौर्बल्यम् अस्ति? नन्दिनीदेवी किमर्थं हसितवती? एतेषां सन्देहानां समाधानं जानन् अपि भवान् यदि न वदेत् तर्हि भवतः शिरः सहस्रधा भग्नं भवेत्'' इति।

तदा त्रिविक्रमः एवम् उक्तवान्– ''नन्दिनीदेव्याः हासस्य विशेषकारणम् अस्ति। यदा सा युवराजे वसन्तसेने आत्मनः प्रेम अस्ति इति उक्तवती तदा महाचोरः, राक्षसः, संन्यासी गोवर्धनः च तस्याः परिणयेच्छां परित्यक्तवन्तः। अनुरोधम् अकृत्वा क्षमाम् अपि प्रार्थितवन्तः। किन्तु जनानां रक्षकः राजा विक्रमसिंहः तु ताम् अनुरोधपूर्वकं राक्षसविधिना परिणेतुं निश्चितवान्। अतः एव नन्दिनीदेवी हसितवती। 'भवान् चोरस्य, राक्षसस्य संन्यासिनः च अपेक्षया अपि नीचः' इति विक्रमसिंहं हासद्वारा सूचितवती सा। एतस्य तत्त्वं जानन् विक्रमसिंहः लज्जाम् अनुभवन् स्वविचारं परिवर्तितवान्। यद्यपि विक्रमसिंहेन प्रथमम् अनौचित्यम् आचरितं, तथापि अनन्तरक्षणे नीतिमार्गः विवेकश्च आश्रितः। अतः सः न भीरुः, न वा दुर्बलः।

चोरः प्रतापः, राक्षसः लम्बकर्णः च नन्दिनीदेव्याः विषये आदरं प्रकटितवन्तौ। संन्यासी गोवर्धनः तु अपरिचितेन विक्रमसिंहेन सह तां प्रेषितवान्। अतः एव सा कष्टे पतिता अभवत्। तादृशः विवेकरहितः संन्यासी चेदपि दण्डनार्हः इति तस्याः अभिप्रायः। चोरः राक्षसः च वृत्त्या नीचौ चेदपि व्यवहारेण श्रेष्ठौ एव। अतः तयोः सम्माननं करणीयम् इति सा सूचितवती'' इति।

एवं वदता त्रिविक्रमेण मौनभङ्गः कृतः आसीत्। अतः शवान्तर्गतः वेतालः ततः अदृश्यः भूत्वा यथापूर्वं वृक्षस्य शाखाम् अवलम्बितवान्।



# महान् लाभः

भूस्वामिनः वीरभद्रस्य समीपम् आगत्य कश्चन व्याधजातीयः कानिचन मूलानि, पर्णानि च समर्प्य एतानि औषधोपयोगीनि इति उक्तवान्।

"मम एतेन किं प्रयोजनम्?" इति पृष्टवान् भूस्वामी।

"श्रीमन्! एतानि अपूर्वाणि मूलानि अन्यत्र कुत्रापि न लभ्यन्ते। एतैः निर्मितस्य कषायस्य सेवनेन शरीरं वज्रसदृशं भवति। रोगभीतिः सर्वथा अपगच्छति" इति उक्तवान् सः व्याधः।

एतेन सन्तुष्टः भूस्वामी स्वसाहाय्यकम् आहूय व्याधाय शतं रजतनाणकानि दातुं सूचितवान्।

तदा सः साहाय्यकः उक्तवान् – "श्रीमन्! पारितोषिकदानात् पूर्वं राजवैद्याय एतेषां मूलानां प्रदर्शनं वरम् इति मम अभिप्रायः" इति।

तदनुगुणं भूस्वामी राजवैद्यं स्वसमीपम् आनाय्य मूलानां परीक्षां कर्तुं सूचितवान्। मूलानां परीक्षां कृत्वा वैद्यः उक्तवान् – "एतैः मूलैः न भवतः, अपि तु व्याधस्य महान् लाभः" इति।

"किमिति? व्याधस्य कथं महान् लाभः?" इति आश्चर्येण पृष्टवान् भूस्वामी।

तदा वैद्यः हसन् पृष्टवान् – "अरण्ये सर्वत्र लभ्यमानानि मूलानि आनीय दत्तानि एतेन। प्रतिफलरूपेण शतं रजतनाणकानि प्राप्नुवन् अस्ति। एवं तर्हि एतैः मूलैः विशेषलाभः भवतः, उत व्याधस्य?" इति।

वैद्यः यदा एवं वदन् आसीत् तदा स्वकीयां वञ्चनां प्रकटितां जानन् व्याधः मौनं ततः पलायितवान्।

भूस्वामी वैद्यं साभिमानं दृष्ट्वा मन्दहासं प्रकटितवान्।






काव्यकथा -

# राक्षसमुद्रिका - ३

मगधराज्यपालकैः नन्दैः अपमानितस्य चाणक्यस्य साहाय्येन चन्द्रगुप्तः नन्दान् पराजित्य मगधसिंहासनम् आरूढवान्। चाणक्यः तस्य मन्त्री अभवत्। सैनिकसाहाय्यं कृतवन्तं पर्वतकं चाणक्यः उपायेन मारितवान्।

नन्दाः पराजिताः इत्यतः तेषां विश्वासपात्रं मन्त्री राक्षसः स्वकीयं कुटुम्बं स्वमित्रस्य प्रमुखवणिजः चन्दनदासस्य आधीन्ये स्थापयित्वा पाटलीपुत्रं परित्यज्य गतवान्।





मलयकेतुः चाणक्यस्य तन्त्रैः दिवङ्गतस्य पर्वतकस्य पुत्रः। अमात्यः राक्षसः मलयकेतोः समीपं गत्वा तदीयं स्नेहं सम्पादितवान्।



नन्दवंशनाशकं चन्द्रगुप्तं चाणक्यं च नाशयितुं राक्षसः उद्युक्तः जातः। एतदर्थं सः प्रतिवेशिराजानां साहाय्यं प्राप्तुं तीव्रं प्रयत्नम् आरब्धवान्।

राक्षसद्वारा आरब्धाः प्रयत्नाः चाणक्येन गुप्तचरद्वारा ज्ञाताः। राक्षसस्य बुद्धिमत्तां राजभक्तिं च चाणक्यः सम्यक् जानाति। 'राक्षसः अस्मत्पक्षम् आनीतः चेदेव राज्यस्य हितम्' इति आलोच्य चाणक्यः एतदर्थम् उपायं चिन्तितवान्।





चाणक्यः वणिजं चन्दनदासम् आहूय– "भवान् राजद्रोहम् आचरितवान्" इति उक्तवान्। "मया तादृशं कार्यं किमपि न कृतम्" इति सधैर्यम् उक्तवान् चन्दनदासः। "राजशत्रोः राक्षसस्य पत्नीपुत्रादिभ्यः स्वगृहे आश्रयं यत् दत्तवान् तत् राजद्रोहाय एव खलु?" इति पृष्टवान् चाणक्यः।

"मित्रस्य पत्नीपुत्रादयः कष्टपरिस्थितौ साहाय्यं पृच्छन्ति चेत् तत् निराकृत्य मौनं कथं वा तिष्ठेयम्?" इति पृष्टवान् चन्दनदासः। चन्दनदासस्य एतं गुणं मनसा श्लाघमानः अपि चाणक्यः– "भवता यत् कृतं तदेव राजद्रोहाय इति मम अभिप्रायः। अतः भवन्तं कारागारे स्थापयिष्यामि" इति उक्त्वा तं कारागारे स्थापयितुं भटान् आज्ञापितवान्।





एकदा चाणक्यः चन्द्रगुप्तम् उक्तवान्– "राजन्! अस्माभिः कथञ्चित् मलयकेतु-राक्षसयोः स्नेहः छेदनीयः, राक्षसः अस्मत्पक्षम् आनेतव्यः च। अतः आवयोः मध्ये अभिप्रायभेदः अस्ति इति जनाः यथा भावयेयुः तथा करणीयम्" इति।

चन्द्रगुप्तः एतत् अङ्गीकृतवान्। उभौ अपि समालोच्य एकां योजनां कृतवन्तौ। एतदनुगुणं चन्द्रगुप्तः वसन्तऋतोः व्याजेन वसन्तोत्सवनिमित्तं नगरस्य अलङ्कारार्थम् आज्ञां कृतवान्।





चाणक्यः नगरद्वारसमीपम् आगत्य तोरणालङ्कारे मग्नान् जनान् उद्दिश्य– "तिष्ठन्तु, अलङ्कारः कोऽपि मास्तु। उत्सवस्य आचरणं न करणीयम्। सर्वे इतः गच्छन्तु। एषा मम आज्ञा" इति कोपावेशेन उक्तवान्। तस्य एतादृशं व्यवहारं दृष्ट्वा सर्वे आश्चर्यचकिताः।

एतं विषयं जनाः महाराजं निवेदितवन्तः। चन्द्रगुप्तः चाणक्यं राजसभाम् आहूय 'एवं प्रवर्तनस्य किं कारणम्' इति पृष्टवान्। "मलयकेतुः राक्षसेन सह मिलित्वा अस्माकम् उपरि आक्रमणं कुर्वन् अस्ति। एतादृशे सङ्कटमये सन्दर्भे किम् उत्सवाचरणम्?" इति कोपावेशेन पृष्टवान् चाणक्यः।





तयोः मध्ये किञ्चित्कालं एतद्विषये वाग्विवादः जातः। तत्सन्दर्भे चन्द्रगुप्तः चाणक्यम् उक्तवान्– "भवतः अपेक्षया अपि राक्षसः एव बुद्धिमान्" इति। "एवं वा? एवं तर्हि एतत्क्षणे एव मया मन्त्रिपदवी परित्यक्ता" इति उक्त्वा चाणक्यः कोपावेशेन सभां परित्यज्य निर्गतवान्।

–(अनुवर्तते)




# लोकज्ञानम्

सुमेरुपुरे विश्वपतिः नाम कश्चन प्रसिद्धः वैद्यः आसीत्। अनन्त-नीलकण्ठ-नामकौ युवकौ वैद्यकीयविद्यायाः अभ्यासार्थं शिष्यत्वेन विश्वपतेः गृहे तिष्ठतः।

अनन्तस्य अपूर्वा ग्रहणशक्तिः स्मरणशक्तिः च आसीत्। तेन चरक-सुश्रुतादीनां ग्रन्थेषु उक्ताः महाविषयकाः श्लोकाः लीलया उच्यन्ते स्म। तस्य एतादृशीं स्मरणशक्तिं दृष्ट्वा आश्चर्यं सन्तोषं च अनुभवन् विश्वपतिः – 'एषः मदपेक्षया अपि श्रेष्ठः वैद्यः भविष्यति। एतस्य पाठनेन मम गुरुत्वं सार्थकं जातम्' इति भावयति।

नीलकण्ठे तादृशी विशेषशक्तिः कापि नास्ति। सः विद्याग्रहणे तीक्ष्णमतिः न चेदपि न मन्दबुद्धिः। सः सर्वदा गुरुम् एव अनुसरन् गुरोः परीक्षापद्धतिं विशेषावधानेन परिशीलयति। 'एषः वैद्यकीयसम्बन्धिनः कांश्चन विषयान् जानाति चेत् अलम्। तेन कथञ्चित् जीवनं यापयितुम् अर्हति' इति आलोच्य विश्वपतिः नीलकण्ठविषये अनवधानं प्रकटयति। शास्त्राणां गहनानि तत्त्वानि अजानन् अपि नीलकण्ठः स्वचिकित्साक्रमं श्रद्धया परिशीलयन् अस्ति इति अंशं विश्वपतिः न जानाति।

कालान्तरे अनन्तस्य नीलकण्ठस्य च विद्याभ्यासः समाप्तः। विश्वपतेः अनुमतिं प्राप्य तौ स्वजन्मस्थलं स्वर्णपुरं गत्वा तत्र भिन्ने स्थले चिकित्सालयम् आरब्धवन्तौ।

केषाञ्चित् वर्षाणाम् अनन्तरं सुदीर्घव्याधिना पीड्यमानः कश्चन धनिकः स्वर्णपुरतः प्रसिद्धवैद्यस्य विश्वपतेः समीपम् आगतवान्। विश्वपतिः तं सम्यक् परीक्ष्य रोगस्य कारणं विविच्य औषधोपचारं संसूच्य



तस्य जन्मस्थलादिविषये पृष्टवान्।

"स्वर्णपुरं मम जन्मस्थलम्" इति यदा तेन धनिकेन उक्तं तदा विश्वपतिः स्वशिष्यौ अनन्त-नीलकण्ठौ स्मृतवान्। "तयोः वृत्तिजीवनं कथं प्रचलति?" इति धनिकं पृष्टवान् विश्वपतिः।

तदा धनिकः उक्तवान् – "नीलकण्ठः स्वर्णपुरे विशेषप्रसिद्धिं प्राप्तवान् अस्ति। सः एव माम् अत्र भवत्समीपं प्रेषितवान् अपि। अनन्तः तु प्रसिद्धिं प्राप्तुम् एव न शक्तवान्। 'वैद्यवृत्तिं परित्यज्य परम्पराप्राप्तया कृषिवृत्त्या जीवननिर्वहणं करणीयम्' इति सः चिन्तयन् अस्ति" इति।

एतत् श्रुतवतः विश्वपतेः महदाश्चर्यम्! अनन्तः महावैद्यः भविष्यति इति विश्वपतेः निरीक्षा आसीत्। तस्य एतादृशी गतिः किमर्थम् इति तेन न ज्ञातम्। 'व्याधिकारणतः अन्येन कारणेन वा तस्य स्मृतिशक्तिः अपगता स्यात् वा? अथवा प्रत्यक्षदर्शनेन सर्वं सुस्पष्टं भवेत्' इति आलोच्य विश्वपतिः अनन्तरदिने एव स्वर्णपुरं प्रति प्रस्थितवान्।

यदा विश्वपतिः अनन्तस्य गृहं प्राप्तवान् तदा अनन्तः केनचित् रोगिणा सह वार्तालापं कुर्वन् आसीत्। विश्वपतिः अन्तः अगत्वा प्रचलत् सम्भाषणं श्रुतवान्।

अनन्तः रोगिणं वदति – "भवतः रोगः न तथा भीकरः। किञ्चित् पीनसः दृश्यते। एतदर्थं भीतिः किमर्थम्? हरिद्राचूर्णं श्रीगन्धेन योजयित्वा सम्यक् मर्दयित्वा मुखे कण्ठे च लेपयतु। श्रीगन्धधूमस्य आघ्राणम् अपि लाभाय। एतावत् करोतु। अन्यत् औषधं किमपि मास्तु" इति।

तदा रोगी कोपेन – "एतं विषयं ज्ञातुं किं भवतः समीपम् आगन्तव्यम् आसीत् वा? एतत् तु सर्वे जानन्ति। मम माता एव एतादृशम् औषधोपचारम् अकरिष्यत्" इति उक्त्वा ततः उत्थाय गतवान्।

रोगिणः निर्गमनानन्तरं विश्वपतिः अन्तः गतवान्। गुरुं दृष्ट्वा अनन्तः झटिति उत्थाय पादाभिवन्दनं कृतवान्। विश्वपतिः तं प्रीत्या आलिङ्ग्य योगक्षेमं पृष्टवान्। तत्सन्दर्भे अनन्तः खेदेन उक्तवान् – "गुरुवर्य! औषधोपचारविषये मम ज्ञाने, कथने,

आचरणे वा कोऽपि लोपः नास्ति इत्यत्र तु मम दृढः विश्वासः। तथापि चिकित्सां प्राप्तुं जनाः मत्समीपं विशेषतः न आगच्छन्ति। तत् किमर्थम् इति अहं न जानामि। प्रायः एतद्विषये दैवं मम विरुद्धं स्यात्" इति।

विश्वपतिः मन्दहासपूर्वकम् पृष्टवान्– "एवं वा? नीलकण्ठः कथम् अस्ति?" इति।

"तस्य वृत्तिः तु सम्यक् एव प्रचलति" इति उक्तवान् अनन्तः।

"सः अपि द्रष्टव्यः मया। मया सह भवान् अपि आगच्छति वा?" इति पृष्टवान् विश्वपतिः।




अनन्तस्य अङ्गीकारानन्तरं तौ नीलकण्ठस्य गृहं गतवन्तौ। तत्र बहवः रोगिणः चिकित्सार्थं प्रतीक्षमाणाः आसन्। नीलकण्ठः केनचित् रोगिणा सह वार्तालापं कुर्वन् आसीत्। रोगिणः स्वरश्रवणेन एव विश्वपतिः ज्ञातवान् यत् यः अनन्तस्य गृहे दृष्टः स एव अत्र आगतः अस्ति इति। अतः सः अन्तः अगच्छन् नीलकण्ठस्य चिकित्साक्रमं परिशीलयन् तत्रैव स्थितवान्।

नीलकण्ठः तु– "भोः, केवलः पीनसः अपि कदाचित् बहूनां रोगाणां कारणं भवितुम् अर्हति। अतः अल्पस्य अपि पीनसस्य उपेक्षा न उचिता। भवान् समये मत्समीपम् आगतवान् इत्यतः चिन्तायाः प्रसक्तिः एव नास्ति। जलदोषनिवारकं दिव्यौषधं मम समीपे अस्ति। तेन कण्ठं मुखं च लेपयामि। श्वः प्रातःकालाभ्यन्तरे रोगः अदृश्यः भविष्यति" इति वदन् समीपस्थात् पात्रात् औषधं स्वीकृत्य रोगिणः ललाटे कण्ठे च औषधलेपनं कृतवान्।

तदा विश्वपतिः अनन्तं मन्दस्वरेण उक्तवान्– "दृष्टवान् खलु अनन्त! दिव्यौषधनाम्ना अनन्तः हरिद्राश्रीगन्ध-मिश्रणम् एव लेपयन् अस्ति" इति।

"पश्यतु गुरुवर्य! दिव्यौषधभ्रान्तिजननं केवलं न, पीनसं सः 'महारोगः' इति अपि कथयति। वस्तुतः तु पीनसः न महारोगः। तस्य निश्चितः औषधोपचारः कोऽपि नास्ति इति शास्त्रेषु लिखितम् अस्ति। एतत् जानन् अपि सः किमपि किमपि वदति। एतादृशः

मार्गः मह्यं तु सर्वथा न रोचते'' इति उक्तवान् अनन्तः।

तदा विश्वपतिः मन्दहासपूर्वकम् उक्तवान्– ''तस्य तथा कथने आचरणे वा अनौचित्यं किमपि मया न दृष्टम्'' इति।

अनन्तः आश्चर्येण गुरोः मुखं पश्यन् स्थितवान्। विश्वपतिः अनन्तस्य स्कन्धे हस्तं स्थापयन्– ''अनन्त! केचन अल्पम् अनारोग्यं दृष्ट्वा अपि भीताः सन्तः औषधोपचारार्थं वैद्यसमीपं धावन्ति। विशेषरोगः नास्ति इति उक्ते, ते असमाधानेन ततः निर्गच्छन्ति। अतः केनापि उपायेन स्वचिकित्साविषये वैद्येन विश्वासः उत्पादनीयः भवति। वस्तुतः एतस्य रोगिणः तु रोगविषये भ्रान्तिः अस्ति। सः यथा समाहितः स्यात् तथा वार्तालापं कृत्वा चिकित्सा करणीया खलु? विश्वासाभावे दिव्यौषधम् अपि निष्प्रयोजकं भवति। विश्वासे सति, कदाचित् सामान्यं जलम् अपि रोगनिवारणसमर्थं भवति। एतत्सर्वं भवता ज्ञातम् एव। अतः सर्वप्रथमम् आगतस्य रोगिणः मनोभूमिका ज्ञातव्या। एतदर्थं लोकज्ञानम् आवश्यकम्। विशेषतः शास्त्रज्ञानं प्राप्य अपि भवान् लोकज्ञानाभावकारणतः नीलकण्ठः इव प्रसिद्धः न जातः। एषा हि वस्तुस्थितिः'' इति उक्तवान्।

विश्वपतिना उक्तं श्रुत्वा अनन्तः आत्मनः लोपं सम्यक् ज्ञातवान्।

अनन्तरं विश्वपतिः अनन्तः च अन्तः गत्वा नीलकण्ठेन सह बहुधा वार्तालापं कृतवन्तौ। विश्वपतिः शिष्ययोः गृहे एकैकं दिनं स्थित्वा आतिथ्यं स्वीकृत्य स्वगृहं गतवान्।

अनन्तः अपि रोगिणां मनोवृत्तिं ज्ञातुं प्रयत्नं कुर्वन् लोकज्ञानं प्राप्य क्रमशः प्रसिद्धः जातः। एषा वार्ता विश्वपतिना अपि जनानां मुखात् श्रुता। 'इतः परम् अनन्तः अपि नीलकण्ठः इव प्रसिद्धः भूत्वा कीर्तिं प्राप्स्यति' इति आलोच्य विश्वपतिः तृप्तिम् अनुभूतवान्।






कम्पमानस्वराणाम् आयुधागारस्य रक्षकाणां कथनात् कंसः ज्ञातवान् यत् अपूर्वं महाधनुः भग्नम् अभवत् इति। पृष्ठास्थिभङ्गम् अनुभवन् इव सः क्षणकालं मौनं स्थितवान्। अनन्तरं सः चिन्ताभारेण अवनतः सन् उत्सवस्य सन्नाहं परिशीलयितुं ततः प्रस्थितवान्। एवं गच्छतः तस्य पादौ कम्पमानौ आस्ताम्।

विशालं रङ्गस्थलं सज्जीक्रियमाणम् आसीत्। राजा, मन्त्रिणः, विविधदेशात् आगताः राजबान्धवाः, भृत्याः, पौराः, विलासिन्यः इत्यादीनाम् उपवेशनार्थं तत्तद्योग्यानि आसनानि निर्मितानि आसन्। आसनारोहणार्थं सुन्दराणि सोपानानि रचितानि आसन्। सर्वत्र नेत्रोत्सवजनकानि शिल्पानि, तोरणानि, जवनिकाः च दृश्यन्ते। विविधैः पुष्पैः, इतरवस्तुभिः च समग्रं भवनम् अलङ्कृतम् आसीत्। गन्धवर्तिकाः सुगन्धं प्रसारयन्ति स्म। भुवम् अवतीर्णः इन्द्रलोकः इव दृश्यते स्म तत् रङ्गस्थलम्।

कंसः व्यवस्थां सुसूक्ष्मं परिशीलयन् तत्र तत्र सूचनाः यच्छन् अन्तःपुरं प्रत्यागतवान्। चाणूर-मुष्टिकनामकौ महामल्लौ तत्र आहूतवान् च

"प्रपञ्चे भवादृशः अन्यः मल्लः कोऽपि नास्ति। बलराम-कृष्ण-नामकौ उद्धतौ तरुणौ अरण्यसञ्चारिणौ इदानीम् अत्र आगतौ स्तः। तयोः न धैर्यं, न प्रभावः, नापि क्रमशिक्षणम्। तथापि सर्वम् अस्ति इति भावयन्तौ तौ गर्वेण व्यवहरतः। भवतोः तयोः



च युद्धं भविष्यति। तस्मिन् युद्धे बालौ इति दयाम् अप्रदर्शयन्तौ भवन्तौ तौ निर्दयं मारयताम्। तदा एव मम मनःसमाधानम्" इति मल्लौ उक्तवान् कंसः।

राज्ञः वचनं श्रुत्वा सन्तुष्टौ तौ महामल्लौ – "सर्वं ज्ञातं महाराज! कीटौ इव तौ सम्यक् मर्दयिष्यावः। आवयोः सामर्थ्यं तु भवान् जानाति एव" इति उक्त्वा गाम्भीर्येण नमस्कृत्य स्वगृहं गतवन्तौ।

अनन्तरं कंसः महामात्रनामकं हस्तिपकम् आहूय – "भोः, भवान् मम आप्तेषु अन्यतमः खलु? कश्चन मुख्यः विषयः इदानीं मया वक्तव्यः अस्ति। महादुष्टौ वसुदेवपुत्रौ इदानीम् अत्र आगतौ स्तः। तौ बलशालिनौ असमसाहसिनौ च इति सर्वे वदन्ति। अतः भवान् श्वः प्रातःकाले एव मदोन्मत्तेन कुवलयापीडनामकेन गजेन सह राजद्वारसमीपे तिष्ठतु। यदा तौ तत्र आगच्छतः तदा कुवलयापीडं कोपयतु। क्षणमात्रेण तौ मृतौ यथा भवेतां तथा करोतु। एतद्विषये मया विस्तरेण वक्तव्यं नास्ति खलु?" इति सूचितवान्।

अनन्तरदिने सूर्योदयः जातः। राजाज्ञानुसारं सर्वे रङ्गस्थलम् आगत्य स्वस्वयोग्यतानुगुणम् उचिते आसने उपविष्टवन्तः। सर्वे बलरामकृष्णयोः आगमनं प्रतीक्षमाणाः सन्ति। कंसः उन्नते सिंहासने उपविष्टः आसीत्। श्वेतवस्त्राणि, मौक्तिकरत्नादिसहितानि आभरणानि च सः धृतवान् आसीत्। शिरसः उपरि श्वेतच्छत्रं विराजते स्म। परिचारिकाः तम् उभयतः स्थित्वा चामरेण वीजयन्त्यः आसन्। आकाशे नक्षत्राणां मध्ये विराजमानः चन्द्रः इव दृश्यते स्म कंसः।

महामल्लौ चाणूर-मुष्टिकौ मदगजौ इव रङ्गस्थलं प्रविश्य कंसस्य पुरतः स्थितवन्तौ। हस्तिपकः महामात्रः कुवलयापीडम् आरुह्य आगत्य राजद्वारसमीपे स्थित्वा बलरामकृष्णयोः आगमनं प्रतीक्षमाणः आसीत्।

किञ्चित्कालानन्तरं बलरामः कृष्णः च द्वारसमीपम् आगतवन्तौ। सर्वे जनाः तौ

परमाश्चर्येण पश्यन्तः आसन्। तौ तु निश्चिन्ततया निर्विकारतया च चलन्तौ इतस्ततः पश्यन्तौ, मन्दहासेन सर्वेषां मनः आकर्षन्तौ अग्रे गच्छतः।

यदा तौ द्वारस्य पार्श्वे आगत्य स्थितवन्तौ तदा युगपत् एव वाद्यध्वनिः जनानां हर्षोद्गारः च सुमहान् उत्थितः। एतन्मध्ये महामात्रः कुवलयापीडं सञ्चोद्य तयोः उपरि आक्रमणार्थं प्रेरितवान्।

एतत् दृष्ट्वा कृष्णः बलरामं पश्यन् हसन्– "आवयोः मातुलः कंसः अस्मन्मारणार्थम् एतं मदगजं सज्जीकृतवान् इति भाति। किन्तु वराकः सः, मृत्युदेवतायाः दंष्ट्राणां मध्ये आत्मनः स्थितिं न जानाति। भवान जागरूकः भवतु। अद्य सम्मुखम् आगता प्रथमा परीक्षा एषा" इति उक्त्वा अग्रे गतवान्।

महादन्ताभ्यां सहितः, अजगरसमानया भयङ्कर्या शुण्डया विराजमानः कुवलयापीडः स्वपादविन्यासेन भूमिं कम्पयन् क्रूरया दृष्ट्या पश्यन् बलराम-कृष्णयोः उपरि आक्रमणार्थम् आगच्छत्।

कृष्णः तु मन्दहासं प्रकटयन् तस्य पुरतः गत्वा स्थितवान्। कुवलयापीडः शुण्डया बलात् प्रहारम् अकरोत्। वक्षःस्थले जातं प्रहारं कृष्णः मन्दहासेन एव सोढवान्। जनाः एतत् दृष्ट्वा आश्चर्यचकिताः सन्तः नेत्रे विशालम् उन्मील्य स्थितवन्तः।

कृष्णः उत्प्लुत्य कुवलयापीडस्य दन्तस्य उपरि स्थित्वा वामेन पादेन तस्य कुम्भस्थलं





बलात् प्रहृतवान्। घीङ्कुर्वतः तस्य पृष्ठभागम् आरुह्य पृष्ठतः प्रसारितां तस्यैव शुण्डाम् अवलम्ब्य अधः अवतीर्य दृढया मुष्ट्या तस्य कटिप्रदेशे ताडनानि दत्तवान्। यावत् सः परिवर्तनार्थम् उद्युक्तः तावता एषः कृष्णः तस्य पादानां मध्यतः गत्वा तदीयं पुच्छं सम्यक् निष्पीडितवान्। तदा वेदनया आक्रन्दनं कुर्वन् कुवलयापीडः भूमौ अपतत्। पादान् इतस्ततः चालयन् प्राणान् अत्यजत् च। तस्य दन्तम् उत्पाट्य तेन हस्तिपकं महामात्रं ताडयन् मारितवान् कृष्णः।

गजस्य रक्तेन स्नातः इव दृश्यमानः कृष्णः गजस्य दन्तं स्वहस्तेन स्वीकृत्य राजसभां प्रविष्टवान्। तं दृष्ट्वा क्रोधं प्रकटयन् कंसः चाणूरं नेत्रसङ्केतेन मारणं स्मारयन् मल्लयुद्धार्थम् आज्ञापितवान्। मुष्टिकः तु राजाज्ञाम् अनुसृत्य बलरामेण सह युद्धार्थम् उद्युक्तः जातः।

चाणूरः मुष्टिकः च महाकारकौ। बलेन दिग्गजसमानौ। 'आवां पराजेतुं समर्थः अस्मिन् लोके कोऽपि नास्ति' इति तयोः गर्वः आसीत्।

चाणूरः कृष्णस्य समीपम् आगत्य कोपेन उपेक्षया च कृष्णं पश्यन् – "अये बाल! गोपालनं कुर्वन् बालान् भाययन् गर्वम् अनुभवति स्म खलु? अद्य मम मुष्टिम् आगतः अस्ति भवान्। इतः विमोचनम् असाध्यम् एव। मातापितरौ बान्धवान् च स्मरतु। यमलोकगमनार्थं सिद्धः भवतु च" इति उक्तवान्।

तस्य तादृशं वचनं श्रुत्वा अपि कृष्णः शान्तेन स्वरेण– "मम मातुलः कंसः भवत्तः बहुधा निरीक्षते। वृथा वार्तालापः किमर्थम्? बलप्रदर्शनं भवतु प्रथमम्" इति उक्तवान्।

चाणूरः झटिति गर्जनं कुर्वन् कृष्णस्य उपरि उत्पतितवान्। "पर्वताकारकः चाणूरः बालस्य कृष्णस्य उपरि आक्रमणं करोति इत्यस्य कः अर्थः? कीदृशम् अन्याय्यम् एतत्। अत्रत्याः ज्येष्ठाः अपि विवेकरहिताः। एषः न मल्लयुद्धस्य क्रमः। समानयोः एव मल्लयुद्धं प्रचलेत्। तथैव मल्लेन सह साहाय्यकरूपेण अन्यः तिष्ठेत् अपि। सः तदा तदा शैत्योपचारादिभिः मल्लस्य सेवां

कुर्यात्। यदि आवश्यकं तर्हि युद्धमध्ये विरामः अपि भवेत्। अत्र तादृशं किमपि न दृश्यते। युद्धं तु आरब्धम् एव। तौ बालौ धैर्येण मल्लाङ्गणं प्रविष्टवन्तौ खलु? ताभ्यां यत् धैर्यं प्रदर्शितं तदर्थं तौ सत्करणीयौ। जयापजयनिर्णयपर्यन्तं युद्धं न प्रचलेत्। किन्तु एतत्सर्वं राजानं कः बोधयेत्?'' इति यादवाः परस्परं वदन्तः आसन्।



एतानि वचनानि कृष्णः अपि श्रुतवान्। सः जनान् उद्दिश्य – ''भवतां वृथा भीतिः मास्तु। मनोबलं, पराक्रमः, साहसं, धैर्यम्, उत्साहः, जयप्राप्तिसङ्कल्पः च यस्य अस्ति तस्य प्रतिस्पर्धी बलशाली वा भवतु महाकायः वा भवतु, किं तेन? शौर्यं वयसः आधारेण न तिष्ठति। एषः चाणूरः करूषदेशे जातान् बहून् मल्लान् मारितवान्। तैः मल्लैः या गतिः प्राप्ता सा एव गतिः इदानीम् एतेन अपि प्राप्यते। भवन्तः सर्वे मौनं सर्वं पश्यन्तु। जयः तु मम एव। एषः हन्तव्यः एव इति मम सङ्कल्पः'' इति उक्त्वा चाणूरेण सह युद्धम् आरब्धवान्।

चाणूरः मल्लयुद्धे अतीव परिणतः। किन्तु कृष्णः ततोऽपि अधिकां परिणतिं प्रदर्शयति। यदा चाणूरः प्रहर्तुम् उद्युक्तः भवति तदा कृष्णः विद्युद्वेगेन पार्श्वे गच्छन् प्रहारप्रयासं व्यर्थं करोति। हरिणः इव रङ्गे सर्वत्र अटन् चाणूरम् आयासयन् समयं प्रतीक्ष्य योग्ये स्थले चाणूरं सम्यक् प्रहरति।

परस्परमुष्टिताडनेन महान् शब्दः उत्पद्यते स्म। परस्परं हस्तप्रहारः पादप्रहारः च प्रवर्तते। दन्तैः नखैः च विदारणार्थं प्रयत्नः अपि प्रचलति। एतत् युद्धम् अतीव घोरम् आसीत्। कदाचित् जनाः युद्धस्य घोरं रूपं द्रष्टुम् अशक्ताः नेत्रे निमील्य तिष्ठन्ति।

कालः क्षणशः गच्छति। युद्धे कृष्णस्य कौशलम् एव अधिकतया दृश्यते। जनाः मध्ये मध्ये कृष्णस्य नाम उक्त्वा जयघोषं कुर्वन्ति। एतत् चिरकालं दृष्ट्वा कंसः नीरसताम् अनुभूय कोपावेशेन ''पर्याप्तम्। युद्धं स्थगयन्तु'' इति उच्चैः उक्तवान्।

किन्तु कृष्णः युद्धात् विरतः न जातः। बहुविधकौशलानां प्रदर्शनस्य अनन्तरं सः चाणूरस्य मारणार्थम् उद्युक्तः जातः।



चाणूरस्य शक्तिः क्षीणा जाता आसीत्। श्रान्तः सः दीर्घं निःश्वसन् मन्दं चलति। यद्यपि सः कोपेन गर्जनं करोति, किन्तु तत् इदानीम् आर्तनादः इव श्रूयते। एवं प्रतिस्पर्धिनं पूर्णतः शक्तिहीनं दृष्ट्वा कृष्णः झटिति उत्प्लुत्य चाणूरस्य मूर्धनि बलात् मुष्ट्या प्रहृतवान्। पुनः भूमौ तिष्ठन् उरसि अपि पादप्रहारं कृतवान्। एतेन चाणूरस्य नेत्रपिण्डं बहिः आगतम्। सः रक्तं वमन् प्राणान् त्यक्तवान्।

तस्मिन् एव समये बलरामः अपि दृढेन मुष्टिप्रहारेण मुष्टिकस्य संहारम् अपि कृतवान्।

एवं महामल्लौ मारयित्वा कृष्णः बलरामः च विजयहासं प्रकटयन्तौ रङ्गस्थलमध्ये स्थितवन्तौ। तौ यया दृष्ट्या कंसं पश्यतः, कंसः च यत् क्रौर्यं प्रकटयति तत् दृष्टवतां नन्दगोपादीनां हृदयानि कम्पितानि अभवन्। भीताः सर्वे मन्त्रमुग्धाः इव मौनं स्थितवन्तः। परिचारिकाणां हस्ततः चामराणि पतितानि। पलायनं कर्तुम् अपि अशक्ताः ताः तत्रैव स्तब्धतया स्थितवत्यः।

"मया प्रसूतः, भीतिकारणात् दूरं प्रेषितः, एषः पुत्रः चाणूरहस्तेन कीदृशीं गतिं प्राप्नुयात्? चिरकालानन्तरं दृष्टः एषः पुत्रः मत्पुरतः एव किं प्राणान् त्यजेत्? अहो विधिविलसितम्!" इति चिन्तयन्ती देवकीदेवी, यदा चाणूरः मृतः तदा आनन्दाश्रूणि स्रावितवती। वसुदेवस्य परिस्थितिः अपि एवम् एव आसीत्।

कंसस्य मुखे स्वेदबिन्दवः दृष्टाः। कोपातिरेकेण तस्य समग्रं शरीरं कम्पते! श्वासोच्छ्वासः दीर्घः जातः। सः रक्तवर्णाभ्यां नेत्राभ्यां सेवकान् पश्यन् – "एतौ उद्धतौ बालौ बद्ध्वा नगरात् निष्कासयन्तु। नन्दगोपं शृङ्खलया बध्नन्तु। मम राज्ये कोऽपि गोपः दृष्टः चेत् सः चोरः इव कठोरं दण्डनम् अर्हति। तस्य ऐश्वर्यं भवताम् एव भवतु। एषः कुटिलाग्रेसरः वसुदेवः मया एव क्रूरतया दण्ड्यते। हुँ, सर्वान् बन्धने स्थापयन्तु" इति गर्जनस्वरेण आज्ञापितवान्।

किन्तु राजाज्ञानन्तरम् अपि कोऽपि भटः

स्वस्थानात् न चलितः। सर्वे शिलात्वं प्राप्तवन्तः इव तत्रैव स्थितवन्तः। देवकीदेवी तु कंसस्य वचनानि श्रुत्वा मूर्च्छां गतवती। वसुदेवः सम्भ्रान्तः जातः।

कृष्णः मातापित्रोः दीनावस्थां, बान्धवानां मनोविप्लवं, सभासदाम् असहायकतां च दृष्ट्वा कोपावेशेन विजृम्भमाणः अनूह्यया गत्या सिंहासनस्य सोपानानि आरूढवान्।

कृष्णस्य सिंहासनसोपानारोहणं कोऽपि न ज्ञातवान् एव। रङ्गस्थलमध्ये स्थितः कृष्णः क्षणाभ्यन्तरे सिंहासनस्य उपरि कंसस्य पुरतः अस्ति।

अनन्तरक्षणे कृष्णः कंसस्य दिशि उत्प्लुत्य तदीयं किरीटं पादेन प्रहृतवान्। किरीटस्थाः मणयः सर्वत्र विकीर्णाः अभवन्। कृष्णः कंसस्य शिखां गृहीत्वा शिरसि, मुखे, वक्षःस्थले च निरन्तरं मुष्टिप्रहारं कृतवान्। जानुना कंसस्य हृदयं निपीडितवान् कृष्णः।

कंसः असहायः सन् कातरतया आकाशं पश्यति। तस्य कण्ठे स्थिताः हाराः भग्नाः। कर्णकुण्डलानि पतितानि। वस्त्राणि अस्तव्यस्तानि जातानि। कर्णाभ्यां नासिकातः मुखात् च रक्तम् आगतम्। कृष्णः कंसं पुनः पुनः मुष्ट्या प्रहरन् अन्ते तं बलात् अधः नोदितवान्। कंसस्य शवः द्वारात् बहिः गत्वा अपतत्।

तस्मिन् एव समये क्रोधेन आक्रमणार्थम् उद्युक्तं कंसस्य सहोदरं सुनामनामकं बलरामः मदगजं सिंहः इव मारितवान्।

याभ्यां हस्ताभ्यां कंसः मारितः ताभ्यां हस्ताभ्यां वसुदेवस्य पादौ गृहीत्वा नमस्कृतवान् कृष्णः। वसुदेवः कृष्णं प्रीत्या दृढम् आलिङ्ग्य आशिषा अनुगृहीतवान्। अनन्तरं कृष्णः देवकीदेवीं नमस्कृतवान्। देवकी कृष्णं प्रेम्णा आलिङ्ग्य आनन्दाश्रूणि स्रावितवती।

कृष्णः उग्रसेनम् अपि भक्त्या नमस्कृतवान्। तस्यापि आशीर्वादं प्राप्य सर्वान् स्वस्वगृहं गन्तुं सूचयित्वा कृष्णः बलरामेण सह वसुदेवस्य गृहं गतवान्।






# महावञ्चकौ

मलयगिरिराज्ये पूर्वं उभौ वञ्चकौ आस्ताम्। तयोः एकस्य नाम वक्रबुद्धिः इति अपरस्य नाम दुर्बुद्धिः इति च प्रसिद्धम् आसीत्। तौ देशसञ्चारं कुर्वन्तौ कदाचित् एकं ग्रामं प्राप्तवन्तौ। तत्र इतस्ततः दृष्टिं प्रसारयन्तौ तौ केदारे चरन्तम् एकं वृषभं दृष्टवन्तौ। तं वृषभं ततः नीत्वा अन्यत्र बद्ध्वा तौ ग्रामस्थां धर्मशालां प्रविष्टवन्तौ। वक्रबुद्धिः धर्मशालायां वसतिं कृतवान्। दुर्बुद्धिः ग्रामं प्रविष्टवान्।

अत्रान्तरे वृषभस्य स्वामी क्षेत्रे वृषभम् अपश्यन् एतां वार्तां सर्वत्र श्रावितवान्। ग्रामे एषा नूतना वार्ता। अतः जनाः समूहरूपेण स्थित्वा एतद्विषये चर्चां कुर्वन्ति।

दुर्बुद्धिः तादृशानां समीपं गत्वा उक्तवान्– "किं, वृषभः न दृश्यते वा? तर्हि धर्मशालायां स्थितं मम गुरुं पश्यन्तु। सः क्षणमात्रेण नष्टं वस्तु कुत्र अस्ति इति वक्तुं समर्थः" इति।

वृषभस्वामी दुर्बुद्धिना इतरग्रामीणैः च सह धर्मशालां गतवान्।

वक्रबुद्धिः प्रवृत्तम् आद्यन्तं श्रुत्वा पेटिकातः एकं ताडग्रन्थं निष्कास्य पठन् क्षणकालं यावत् नेत्रनिमीलनं कृत्वा अन्ते उक्तवान्– "ज्ञातं सर्वम्। एतस्याः धर्मशालायाः उत्तरस्यां दिशि कश्चन वटवृक्षः अस्ति। ततः पश्चिमतः कश्चन तिन्त्रिणीवृक्षः दृश्यते। तस्य पश्चिमतः कश्चन आम्रवृक्षः अस्ति। तत्प्रदेशे अदृश्यतां गतः एषः वृषभः दृश्यते" इति।

वृषभस्य अन्वेषणार्थं वृषभस्वामी उद्युक्तः अभवत्। दुर्बुद्धिः अन्ये ग्रामीणाः च तम् अनुसृतवन्तः। वक्रबुद्धिना सूचिते स्थले वृषभः आसीत्। 'गुरुदक्षिणारूपेण धनं

"बर्मादेशस्य जानपदकथा"



दातव्यम्' इति उक्त्वा दुर्बुद्धिः वृषभस्वामितः दश रूप्यकाणि स्वीकृतवान्।

एवं विनायासेन तौ धनं सम्पादितवन्तौ। एतं ग्रामं त्यक्त्वा अन्यं ग्रामं गन्तुं यदा तौ उद्युक्तौ जातौ तदा ग्रामाधिकारी तयोः समीपम् आगत्य उक्तवान्– "दैववशात् भवन्तौ प्राप्तौ। अहं समये उपस्थितः" इति।

एतौ वञ्चकौ ग्रामाधिकारिणः आगमनस्य कारणं पृष्टवन्तौ। तदा ग्रामाधिकारी उक्तवान् – "मम सुवर्णमयः पतद्ग्रहः चोरितः अस्ति। केन चोरितम् इति न ज्ञायते। कृपया ज्योतिषबलात् तत् मह्यं दापनीयम्" इति।

वक्रबुद्धिः क्षणकालं मौनं स्थित्वा तात्कालिकम् एकम् उपायम् आलोच्य ग्रामाधिकारिणम् उक्तवान्– "एषः वर्ज्यः समयः। अस्मिन् समये किमपि कार्यं न क्रियते मया। श्वः प्रातः आगच्छतु।" इति।

"अस्तु श्रीमन्! श्वः सूर्योदयसमये आगमिष्यामि। तावत्पर्यन्तं भवद्भ्यां मन्निमित्तम् एतस्यां धर्मशालायां स्थातव्यम्। अन्यः ग्रामः न गन्तव्यः" इति विनयेन निवेद्य ततः गतवान् ग्रामाधिकारी।

"इदानीं पलायनम् एव उचितम्" इति सूचितवान् दुर्बुद्धिः।

"रात्रौ सर्वेषां शयनानन्तरं पलायनं करवाव" इति उक्तवान् वक्रबुद्धिः।

अत्रान्तरे ग्रामाधिकारी स्वगृहं गत्वा - श्वः प्रातः चोरं ग्रहीष्यामि इति ज्योतिषाचार्येण उक्तम् इति, तेन कर्तुम् अशक्यं लोके किमपि नास्ति इति, पतद्ग्रहः प्राप्तः इव इति च सर्वान् सन्तोषेण उक्तवान्।

तस्य गृहे प्रारब्धः नाम कश्चन कर्मकरः आसीत्। सः एव वस्तुतः पतद्ग्रहस्य चौर्यं कृतवान् आसीत्। ज्योतिषाचार्यस्य नामश्रवणेन एव तस्य स्थैर्यम् अपगतम्। तस्यां रात्रौ सः धर्मशालां गत्वा तयोः सम्भाषणं रहसि शृण्वन् स्थितवान्।

"तदा एव आवयोः गमनम् उचितम् अभविष्यत्। इदानीं चौर्येण गमनं न शोभते। एतत् तु अनुचितं कार्यम्" इति उक्तवान्



वक्रबुद्धिः।

"मयि किमर्थं कोपः? एतादृशी परिस्थितिः आपतेत् इति मम किं कल्पना आसीत् वा? सर्वं प्रारब्धकर्म" इति उक्तवान् दुर्बुद्धिः।

"आं, प्रारब्धफलम् एतत्" इति खेदेन उक्तवान् वक्रबुद्धिः। 'प्रारब्धम्' इति ताभ्यां द्वित्रवारम् उक्तं श्रुतवान् प्रारब्धः। एतत् श्रुतवतः तस्य धैर्यं सर्वथा गतम्। सः अन्तः गत्वा तयोः पादयोः प्रणम्य – "अये महात्मानौ! अहं रक्षणीयः। पतद्ग्रहः कुत्र स्थापितः इति अहं सूचयामि। यतः मया एव चौर्यं कृतम्। किन्तु मां यजमानस्य वशे न अर्पयताम्। सः मम चर्म निष्कासयेत्" इति दैन्येन प्रार्थितवान्।

"प्रथमं तावत् पतद्ग्रहं कुत्र स्थापितवान् इति वदतु" इति कोपेन गर्जितवान् वक्रबुद्धिः।

प्रारब्धः तत् स्थलम् उक्त्वा पुनः पुनः अभयं सम्प्रार्थ्य ततः गतवान्।

अनन्तरदिने सूर्योदयकाले ग्रामाधिकारी तयोः समीपम् आगतवान्।

"एतस्य ग्रामस्य श्मशानस्य सोपानानाम् अधः पतद्ग्रहः स्थापितः अस्ति। शीघ्रं गत्वा आनयतु। विलम्बः कृतः चेत् तत् पात्रं पिशाचैः वशीक्रियेत" इति ग्रामाधिकारिणं सूचितवान् वक्रबुद्धिः।

ग्रामाधिकारी वक्रबुद्धिना सूचितं स्थलं गत्वा पतद्ग्रहं प्राप्तवान्। सन्तुष्टः सः ताभ्यां शतं रूप्यकाणि उपायनरूपेण दत्त्वा तौ भोजनकूटार्थं स्वगृहम् आहूतवान्।

यदा तौ आनन्देन भोजने मग्नौ आस्तां तदा कश्चन राजभटः आगत्य ग्रामाधिकारिणम् उक्तवान्– "दिनत्रयात् पूर्वं सप्त महानौकाः नौकास्थानं प्रति आगताः। तासां नौकानाम् अन्तः अमूल्यानि वस्तूनि सन्ति। वणिक्प्रमुखः राजानम् उक्तवान् यत्– मया एका अयसः पेटिका दीयते। सप्ताहाभ्यन्तरे पेटिकायाः अन्तः किम् अस्ति इति वक्तुं शक्तं चेत् मदीया समग्रा सम्पत्तिः भवते दीयते, वक्तुं न शक्तं चेत् भवता मह्यं राज्यम् अर्पणीयम् इति। अभिमानवशात् राजा एतत्




अङ्गीकृतवान्।

राज्ञः आस्थाने बहवः दैवज्ञाः सन्ति। तेषां विषये महाराजस्य महान् विश्वासः आसीत्। तदाधारेण सः वणिजः पणम् अङ्गीकृतवान्। किन्तु ते दैवज्ञाः पेटिकायाः अन्तः किम् अस्ति इति वक्तुं न शक्नुमः इति वदन्तः असहायकतां प्रकटितवन्तः। एतावता एव त्रीणि दिनानि अतीतानि। इतः परं चतुर्षु दिनेषु उत्तरं न उक्तं चेत् राजा राज्यभ्रष्टः भविष्यति। अतः भीतः राजा सर्वेभ्यः ग्रामाधिकारिभ्यः वार्तां प्रेषितवान् यत् ज्योतिषिकाः यत्र कुत्रापि दृष्टाः चेदपि त्वरया राजधानीं प्रति प्रेषणीयाः इति। अतः भवतः ग्रामे स्थिताः ज्योतिषिकाः अविलम्बेन प्रेषणीयाः" इति।

ग्रामाधिकारी वक्रबुद्धिम् उक्तवान् – "ज्योतिषाचार्ये भवति विद्यमाने किं भयं महाराजस्य? भवान् शिष्येण सह राजधानीम् आगच्छतु" इति।

अन्यथा मार्गस्य अभावात् तौ वञ्चकौ राजधानीं गतवन्तौ। राजधान्यां राजोपचारः एव प्रवृत्तः। राज्ञा तौ सूचितौ यत् अन्तिमदिनतः पूर्वं पेटिकारहस्यं ज्ञात्वा वक्तव्यम्, अन्यथा भवतोः शिरच्छेदः भवेत् इति। अन्तिमं दिनम् अपि उपस्थितम्।

"अद्य रात्रौ एव पलायनं करवाव" इति उक्तवान् दुर्बुद्धिः।

"पलायनं करणीयम् इति तु सत्यम्। किन्तु कथम्? सर्वत्र राजभटाः सन्ति। समुद्रमार्गेण पलायनं कृतं चेत् अपायः न्यूनः भवेत्" इति सूचितवान् वक्रबुद्धिः।

रात्रेः द्वितीये यामे तौ मार्जारगत्या मन्दं राजधानीतः निर्गत्य समुद्रतीरं प्राप्तवन्तौ। ततः तरणं कृत्वा अग्रे गतवन्तौ। एवं गमनसमये कस्याञ्चित् महानौकायां कयोश्चित् सम्भाषणं ताभ्यां श्रुतम्।

"तात! तस्यां पेटिकायां किम् अस्ति? वदतु भोः" इति काचित् बालिका आग्रहपूर्वकं पृष्टवती।

"तादृशेषु विषयेषु भवत्याः चिन्तनं किमर्थम्? गत्वा शयनं करोतु तावत्" इति उक्तवान् तस्याः पितामहः।

"पेटिकायां किम् अस्ति इति उक्तं चेदेव

मम शयनम्। अन्यथा शयनम् एव न करोमि" इति सा धाष्ट्र्येन उक्तवती।

"इतः परं किं, श्वः प्रातः सर्वं ज्ञातं भविष्यति। वस्तुतः तस्यां पेटिकायां विशिष्टं वस्तु किमपि नास्ति। अयःपेटिकायाः अन्तः पित्तलपेटिका, तस्याः अन्तः रजतपेटिका, रजतपेटिकायाः अन्तः च सुवर्णपेटिका अस्ति। तृप्ता खलु? इदानीं गत्वा शयनं करोतु" इति उक्तवान् सः पितामहः। सः पितामहः नाविकानां नायकः आसीत्।

एतस्य सम्भाषणस्य श्रवणेन वञ्चकाभ्यां पेटिकायाः रहस्यं ज्ञातम्। अतः तौ तरन्तौ प्रत्यागतवन्तौ। राजप्रासादं गत्वा सुखेन सुप्तवन्तौ च। अनन्तरदिने प्रातः महाराजं पेटिकारहस्यं निवेदितवन्तौ च।

उत्तरं श्रुत्वा तृप्तः नौकायजमानः नियमानुगुणं सर्वां सम्पत्तिं महाराजाय अर्पितवान्।

राजा एतेन प्रसङ्गेन अतीव सन्तुष्टः। वक्रबुद्धिम् आस्थानज्योतिषिकस्थाने नियोक्तुं निश्चितवान् राजा।

एतत् तु तौ वञ्चकौ न इच्छतः। एतेन तयोः वञ्चना कदाचित् प्रकटिता भवितुम् अर्हति खलु? अतः तौ एकम् उपायं चिन्तितवन्तौ।

अनन्तरदिने वक्रबुद्धिः महाराजेन सह सम्भाषमाणः आसीत्। तदा दुर्बुद्धिः रुदन् आगत्य– "गुरुवर्य! सर्वनाशः सम्पन्नः। आवयोः गृहम् अग्निना दग्धम् अभवत्। सर्वे ज्योतिषग्रन्थाः भस्मीभूताः" इति दुःखेन निवेदितवान्।

"हा हन्त! कीदृशी दुर्गतिः। ग्रन्थानाम् अभावे ज्योतिषफलकथनं किम्? अहं जीवच्छवः जातः" इति आक्रोशनं कृतवान् वक्रबुद्धिः।

"आचार्य! चिन्तां मा करोतु। एतावता भवता यत् कृतं तदेव अपूर्वम्। भवतः जीवनं सुखमयं यथा भवेत् तथा धनव्यवस्थाम् अहं करिष्यामि" इति आश्वासनं दत्तवान् राजा। अनन्तरं तौ राजाश्रये सुखेन स्थितवन्तौ।





# सेनापतिनियुक्तिः

महातलदेशं सिंहकेतुः नाम राजा पालयन् आसीत्। तस्य सेनापतिः वीरवर्मा युद्धतन्त्रेषु, धैर्ये, साहसे च अप्रतिमः आसीत्।

वर्षेषु गच्छत्सु वीरवर्मा वृद्धः जातः। तस्य देहशक्तिः अपि क्षीणा जाता। 'इतः परं मया सेनापतिपदवीतः निवृत्तिं प्राप्य विश्रान्तजीवनं यापनीयम्' इति आलोचितवान् सः।

एतद्विषये पुनः पुनः विमृश्य निश्चयं दृढीकृत्य महाराजस्य सिंहकेतोः समीपं गतवान् वीरवर्मा।

तत्समये मन्त्री अपि राजसमीपे एव आसीत्। 'युक्ते समये आगतवान् अहम्' इति आलोचितवान् वीरवर्मा।

सः आत्मनः अभिप्रायं यदा निवेदितवान् तदा राजा असम्मतिपूर्वकम् उक्तवान्– "सद्यः सेनापतिपदवीतः भवतः निवृत्तिम् अहं न इच्छामि। वृद्धस्य निवृत्तिः उचिता एव इति विषयं तु अङ्गीकरोमि। अतः भवान् एवं करोतु-भवतः पुत्रौ भवता सह गत्वा अनेकेषु युद्धेषु शौर्यपराक्रमादिकं प्रदर्शितवन्तौ एव। अतः तयोः अन्यतरं सेनापतित्वेन सज्जीकरोतु। अनन्तरं भवतः निवृत्तिविषये चिन्तयिष्यामः" इति।

एतत् श्रुत्वा क्षणकालस्य मौनानन्तरं वीरवर्मा महाराजम् उक्तवान् – "महाराज! मम पुत्रौ शूरसिंहः, जयसिंहः च सेनापतिस्थानम् अलङ्कर्तुम् अर्हौ इति तु सत्यम् एव। मम दृष्ट्या तयोः सामर्थ्यं समानम् अस्ति। तयोः कः समर्थः इति निर्णेतुं मम योग्यता नास्ति इति अहं भावयामि। यतः अहं तयोः पिता अस्मि। अतः भवान् एव निष्पक्षपातं निर्णयं करोतु" इति।

'सेनापतेः विचारः युक्तः एव' इति

आलोचितवान् राजा।

अतः सेनापतेः निर्गमनानन्तरं मन्त्रिणा सह समालोच्य योग्यम् उपायं चिन्तितवान् सः।

अनन्तरदिने राजा सिंहकेतुः राजसभायां सेनापतेः वीरवर्मणः विश्रान्तिप्रस्तावम् उपस्थाप्य– "वीरवर्मणः पुत्रयोः शूरसिंह-जयसिंहयोः अन्यतरः सेनापतिस्थानम् अलङ्करोतु इति अस्माकम् अभिप्रायः। अतः एतदर्थं योग्यः कः इति इदानीं निश्चेतव्यम् अस्ति" इति उक्त्वा परितः एकवारं दृष्टिं प्रसारितवान्।

जनाः अङ्गीकारपूर्वकं करताडनशब्दं कृतवन्तः।

तदा सिंहकेतुः शूरसिंहं जयसिंहं च स्वसमीपम् आहूय– "राजपदवी इव सेनापतिपदवी वंशपरम्पराप्राप्ता न इति भवन्तौ जानीतः एव। भवन्तौ शौर्येण, साहसेन, युद्धनैपुण्येन च पितुः समानौ इति अंशम् अहं जानामि एव। सेनापतिस्थानम् एकम् एव खलु? अतः भवतोः अन्यतरः तत् स्थानं प्राप्तुम् अर्हति। सः कः इति निर्णयार्थं काचित् परीक्षा आयोजिता अस्ति। तद्द्वारा लोकज्ञानाधिक्यस्य निर्णयः क्रियते। भवन्तौ सिद्धौ वा?" इति पृष्टवान् राजा।

तदा शूरसिंहः जयसिंहः च शिरश्चालनपूर्वकम् आत्मनः अङ्गीकारं सूचितवन्तौ।

सिंहकेतुः पुनः उक्तवान्– "तत्र दृश्यमानेषु प्रकोष्ठेषु कानिचन वस्तूनि



सन्ति। तेषु आत्मनः इष्टं किम् इति वक्तव्यम्। प्रथमे प्रकोष्ठे धनराशिः अस्ति। द्वितीये प्रकोष्ठे आयुधराशिः अस्ति। तृतीये च प्रकोष्ठे आहारसामग्र्यः सन्ति। तानि परिशील्य तेषु किम् इष्टतमम् इति सूच्यताम्'' इति।

अनन्तरं कश्चन भटः आगत्य शूरसिंहं तेषां प्रकोष्ठानां समीपं नीत्वा त्यक्त्वा आगतवान्।

शूरसिंहः त्रिषु प्रकोष्ठेषु स्थितानि वस्तूनि परिशील्य राजसमीपम् आगत्य उक्तवान्– ''महाराज! मह्यं तु द्वितीये प्रकोष्ठे स्थिताः युद्धसामग्र्यः अरोचन्त'' इति।

राजा मन्त्री च परस्परं मुखं पश्यन्तौ मन्दहासं प्रकटितवन्तौ।

अनन्तरं जयसिंहः शूरसिंहः इव भटेन सह गत्वा प्रकोष्ठस्थानि वस्तूनि परिशील्य आगत्य– ''महाराज! मह्यं तु प्रथमप्रकोष्ठे स्थितः धनराशिः एव अरोचत'' इति उक्तवान्।

तदा राजा पृष्टवान्– ''एवं वा? केन कारणेन भवान् धनराशिम् एव इष्टवान्?'' इति।

''महाराज! लोके धनम् एव श्रेष्ठम्। तेन धनेन अन्ययोः प्रकोष्ठयोः स्थिताः युद्धसामग्रीः, आहारपदार्थान् च प्राप्तुं शक्नुमः। एतावदेव न, सैन्यसङ्ग्रहणं कृत्वा राज्यम् अपि सम्पादयितुं शक्नुमः। सर्वेषु अपि कार्येषु धनम् अनिवार्यम् एव। अतः अहं धनराशिम् एव विशेषतः इष्टवान्'' इति गम्भीरेण ध्वनिना उत्तरं दत्तवान् जयसिंहः।

तदा सभासदः सर्वे करताडनपूर्वकम् आत्मनः सन्तोषं प्रकटितवन्तौ।

राजा सिंहकेतुः स्वकण्ठे स्थितं मुक्ताहारं निष्कास्य जयसिंहस्य कण्ठे स्थापयन् – ''जयसिंहस्य व्यवहारज्ञानं प्रशंसनीयम् अस्ति। अतः एतम् एव सेनापतिस्थाने नियुक्तवान् अस्मि'' इति हसन् उक्तवान्।

पुनः अपि सभायां सन्तोषोत्थितः करताडनशब्दः प्रतिध्वनितः अभवत्।





# चतुरः देवः

भण्डारपुरनामके ग्रामे गोविन्दः नाम महाचोरः निवसति स्म। चौर्यं तस्य परम्परागता वृत्तिः।

गोविन्दस्य ज्येष्ठभगिनी सुलोचना। सुलोचनायाः एकः पुत्रः आसीत्। तस्य नाम देवः इति। सुलोचना कदाचित् पुत्रम् आहूय उक्तवती– "मातुलसमीपं गत्वा चोरविद्यां सम्यक् ज्ञात्वा आगच्छतु" इति।

देवः तु जन्मना एव चोरः। प्रसविकायाः कण्ठे स्थितस्य सुवर्णहारस्य मणिं जन्मसमये स्वहस्तेन गोपितवान् आसीत् देवः। देवस्य एतादृशं सामर्थ्यं जानन् गोविन्दः सन्तोषेण तं चोरविद्यां बोधितवान्।

देवः चौर्ये तावत् प्रावीण्यं सम्पादितवान् यत् गोविन्दः यथा न जानीयात् तथा गोविन्दगृहे एव लघुचौर्यं करोति स्म सः। गोविन्दः चौर्यार्थं गमनसमये तदा तदा देवम् अपि आत्मना सह नयति।

एकदा गोविन्दः देवः च चौर्यार्थं समीपस्थं ग्रामं गतवन्तौ। तस्मिन् ग्रामे स्थितः न्यायाधीशः धनिकः इति गोविन्देन श्रुतम् आसीत्। अतः तत्र चौर्यं करणीयम् इति तयोः विचारः। यावत् तौ तं ग्रामं प्राप्तवन्तौ तावता अन्धकारः व्याप्तः आसीत्।

न्यायाधीशः प्रतिदिनम् अपि विलम्बेन गृहं प्रत्यागच्छति इति एषः विषयः गोविन्देन पूर्वम् एव ज्ञातः आसीत्। अतः न्यायाधीशस्य प्रत्यागमनात् पूर्वम् एव चौर्यं समाप्य प्रतिगन्तव्यम् इति तस्य विचारः।

तौ न्यायाधीशस्य गृहस्य समीपम् आगतवन्तौ। तदा देवः गोविन्दम् उक्तवान्– "मम तु इदानीं महती बुभुक्षा। अतः पाकशालां गत्वा खाद्यस्य अन्वेषणं करोमि अहम्" इति।

"पञ्चविंशतिवर्षेभ्यः पूर्वं चन्दमामायां प्रकाशिता कथा"



"अस्तु। अहं गृहस्य अट्टम् आरुह्य धनस्य आभरणानां च अन्वेषणं करोमि। मम कार्यं पूर्वं समाप्तं चेत् बहिः वृक्षस्य अधः तिष्ठामि। भवतः कार्यं पूर्वं समाप्तं चेदपि भवता एवम् एव करणीयम्। ततः मिलित्वा उभौ अपि गृहं गच्छाव" इति उक्तवान् गोविन्दः।

अनन्तरं सः गृहस्य पृष्ठभागं गत्वा ततः अट्टम् आरूढवान्। देवः पुरोभागतः एव प्रवेष्टुम् उद्युक्तः जातः। द्वारं यदा लघु नोदितं तदा स्वयम् उद्घाटितम् अभवत्। एषः अन्तः गत्वा द्वारम् अर्गलेन कीलितवान्।

मार्जारः इव विना शब्दं पाकशालापर्यन्तं गत्वा अन्तः दृष्टिं प्रसारितवान् देवः। गृहे कुत्रापि कोऽपि शब्दः न श्रूयते। पाकशालायां न्यायाधीशस्य पत्नी आञ्चलं प्रसार्य तदुपरि सुप्ता आसीत्। पार्श्वे एव देवमण्डपः आसीत्। देवपीठस्य पुरतः नैवेद्यार्थं भक्ष्याणि सुन्दरतया स्थापितानि आसन्। तेषां गन्धम् आघ्रातवतः देवस्य बुभुक्षा द्विगुणिता जाता।

तद्दिने एकादशी तिथिः। न्यायाधीशः तस्य पत्नी च उपवासम् आचरितवन्तौ आस्ताम्। रात्रेः उपाहारार्थं मुद्गनिर्मितं दोसाखाद्यं पायसं च सज्जीकृतम् आसीत्। नारिकेलनिर्मितम् उपसेचनम् अपि आसीत्। द्वादशीपारणपर्यन्तं निराहारं स्थातुं वृद्धयोः तयोः शक्तिः नास्ति। अतः पुरोहितस्य उपदेशानुसारं तौ एवंक्रमेण उपवासम् आचरतः। उभयोः निमित्तम् अष्ट दोसाखाद्यं निर्मितवती आसीत् न्यायाधीशस्य पत्नी। पत्युः निरीक्षायां स्थिता सा उपवासायासवशात् लघुनिद्रां प्राप्तवती आसीत्।

देवः देवमण्डपस्य पुरतः एव उपविश्य दोसाखाद्यं उपसेचनेन सह खादितवान्। पायसम् अपि सम्यक् पीतवान्। सर्वाणि अतीव रुचिकराणि आसन्। इतोऽप्यधिकं स्युः चेदपि देवः खादेत्, किन्तु न सन्ति!

देवस्य बुभुक्षा पूर्णतः निवृत्ता। येन आगतं तेन मार्गेण गन्तुम् उद्युक्तः देवः। किन्तु अत्रान्तरे द्वारताडनशब्दः, 'द्वारम् उद्घाटयतु भोः' इति कण्ठध्वनिः च श्रुतः।

एतं शब्दं श्रुत्वा गृहिणी झटिति उत्थाय "एषा अहम् आगता SS"इति वदन्ती द्वारम् उद्घाटयितुं गतवती।

'आगतः गृहस्य यजमानः एव स्यात्। सः पाकशालाम् आगच्छति एव। ततः पूर्वं मया कुत्रापि निलीय स्थातव्यम्' इति आलोच्य देवः पाकशालायां स्थितायाः निश्रेण्याः द्वारा अट्टम् आरुह्य पात्राणां मध्ये उपविष्टवान्।

यथा देवेन चिन्तितं तथैव सः न्यायाधीशः पत्न्या सह साक्षात् पाकशालाम् एव आगतवान्।



"शीघ्रं हस्तौ पादौ च प्रक्षाल्य आगच्छामि। उपाहारः सिद्धः खलु? महती बुभुक्षा मम" इति वदन् स्नानगृहस्य समीपं गतवान् सः।

"उपाहारः तदा एव सिद्धः। भवतः आगमनम् एव प्रतीक्षमाणा आसम् अहम्" इति वदन्ती गृहिणी देवमण्डपस्य पुरतः दृष्टवती।

तत्र भक्ष्याणि कुत्र सन्ति? सा सम्भ्रान्तस्वरेण उक्तवती– "अये! किम् एतत्? मया सज्जीकृतानि दोसाभक्ष्याणि पायसं च कुत्र गतानि? पात्राणि रिक्तानिं दृश्यन्ते खलु?" इति।

तदा न्यायाधीशः तत्र आगत्य कोपेन – "मम आगमनपर्यन्तं सोढुम् अशक्ता भवती एव खादितवती स्यात्। तृतीयः कः अस्ति अत्र?" इति उक्तवान्। बुभुक्षितः को वा रिक्तानि पात्राणि दृष्ट्वा झटिति कोपं न अनुभवेत्?

"शान्तं पापम्। भवतः आहारसेवनतः पूर्वं मया कदापि आहारः स्वीकृतः वा? किमर्थम् एवं वदति? देवसाक्षितया वदामि – मया किमपि न खादितम्" इति खेदेन उक्तवती गृहिणी।

"भवतीं विना अन्यः कः खादेत्? को वा आगच्छति अत्र?" इति पुनः कोपेन उक्तवान् न्यायाधीशः।

"अहं तु किञ्चित्कालं निद्रावशं गता आसम्। तदा देवः एव खादितवान् स्यात्। अद्य आदिनम् उपवासः एव खलु तस्यापि?" इति उक्तवती गृहिणी।

"हुँ, देवः खाद्यं खादति वा? अपराधं कृत्वा

असत्यम् अपि वदति। दण्डनं सत्यं वाचयति, तिष्ठतु" इति वदन् न्यायाधीशः ततः गत्वा एकं दण्डम् आनीतवान्।

एतत्सर्वं पश्यन् देवः न्यायाधीशविषये नितरां कुपितः। सः कोपावेशेन पति-पत्न्योः मध्ये अवप्लुत्य न्यायाधीशम् उक्तवान् – "अहम् अस्मि देवः। एषा माता सत्यम् एव वदन्ती अस्ति। भवतोः उपाहारः मया एव सेवितः। वृथा किमर्थम् एतां निरपराधिनीं दण्डयति?" इति।

देवं दृष्ट्वा न्यायाधीशः क्षणकालं स्तब्धः। किं प्रवर्तते इति तेन न ज्ञातम्।

अत्रान्तरे गृहात् बहिः – "देवऽऽ, देवऽऽ", इति क्षीणः आह्वानध्वनिः श्रुतः।

"एषोऽहम् आगतः" इति वदन् देवः, पति-पत्न्योः पुरतः एव सधैर्यं बहिः निर्गतवान्।

गोविन्दः तु गृहस्य अट्टे बहुधा अन्वेषणानन्तरम् अपि किमपि अप्राप्य निराशया बहिः आगत्य देवस्य प्रतीक्षायाम् आसीत्। तदा तेन पाकशालातः सम्भाषणध्वनिः श्रुतः। भागिनेयः गृहसदस्यैः बद्धः स्यात् इति आलोच्य सः तथा आहूतवान् आसीत्। 'एषोऽहम् आगतः' इति देवस्य वचनं श्रुत्वा सः आश्चर्यचकितः।

सधैर्यं बहिः आगतेन देवेन सह गोविन्दः गृहं प्रस्थितवान्। मार्गे प्रवृत्तं सर्वं श्रुत्वा गोविन्दः – "महत् धैर्यं भवतः! चौर्यं कृत्वा निवेद्य अपि आगतवान् भवान्। साधु, साधु!" इति देवं वदन् सन्तोषेण तस्य स्कन्धे हस्तं स्थापितवान्।

देवस्य निर्गमनस्य अनन्तरं गृहिणी प्रवृत्तं ज्ञात्वा पतिम् उक्तवती – "हा हन्त! किमर्थम् एवं स्तम्भः इव तिष्ठति? सः चोरः एव, न तु देवः। गृह्णातु तम्" इति।

तदा न्यायाधीशः झटिति बहिः आगतवान्। किन्तु अत्रान्तरे चोरौ सुदूरं गतवन्तौ आस्ताम्।

अनन्तरं न्यायाधीशस्य पत्नी उपाहारार्थं त्वरया पृथुकान् सज्जीकृतवती।





## वृक्षेषु अशनिपातः

इंग्लेण्ड्देशे सिन्दूर(ओक्) वृक्षाः पाप्लार्वृक्षाः च पुनः पुनः अशन्या पीडिताः भवन्ति।

यदा आपत् उपस्थिता भवति तदा उष्ट्रपक्षी स्वकीयं शिरः सिकतासु स्थापयन् आत्मरक्षणं करोति इति प्रथा श्रूयते। किन्तु वस्तुस्थितिः तथा नास्ति। यदा कोऽपि शब्दः श्रूयते तदा एषः पक्षी शिरः अवनमय्य एकाग्रचितः भवति। आपदः उपस्थितौ तु इतरजीविनः इव एव एषः अपि पलायनं करोति।






## लावारसः

लावारसस्य औष्ण्यं तु प्रायः ४,००० डिग्रि फेरन्हीट् परिमितं भवति।

# कठिनशब्दानां सान्दर्भिकाः अर्थाः

| | | | |
|---|---|---|---|
| अजगरः - | Python | पारणम् - | Eating at the end of a fast |
| अपनीय - | Having removed | पीनसः - | Cold |
| अवप्लुत्य - | Having jumped down | पृथुकाः - | Beaten rice |
| अक्षक्रीडा - | Game of dice | प्रकोष्ठः - | Room |
| आघ्राणम् - | Smelling | प्रथा - | Proverb |
| आञ्चलः - | End of a saree | प्रबन्धकः - | Administrative officer |
| आयासयन् - | Causing fatigue | प्रसविका - | Midwife |
| आरक्षकस्थानकम् - | Police station | फेनः - | Foam |
| उपसेचनम् - | Chutney | मस्तिष्कम् - | Brain |
| कार्पासः - | Cotton | मातुलः - | Maternal uncle |
| कीटः - | Insect | मार्जारः - | Cat |
| केदारः - | Paddy field | मुद्गः - | Greengram dhall |
| गन्धवर्तिका - | Incense sticks | मूर्धा - | Forehead |
| जवनिका - | Curtain | वस्तुबन्धः - | Parcel |
| जानु - | Knee | वाताटः - | Kite |
| नारिकेलम् - | Coconut | विकल्पः - | State of indecision |
| निरीक्षकः - | Inspector | शारीरकः - | Physical |
| निश्रेणी - | Ladder | शुण्डा - | Trunk of an elephant |
| नोदितवान् - | Pushed forward | सोपानम् - | Staircase |
| पतद्ग्रहः - | Spit-box | स्नानगृहम् - | Bathroom |
| पाकशाला - | Kitchen | हरिद्रा - | Root of turmeric |
| पादक्रमः - | Walking | हस्तिपकः - | Mahout |

* *

# चित्रशीर्षिका-स्पर्धा * पारितोषिकं ५०/- रूप्यकाणि

## विजितां शीर्षिकां नवम्बर्-८८ मासे प्रकटयिष्यामः।





*उपरितन चित्रद्वयं पश्यन्तु। *युक्तां शीर्षिकां परस्पर-सम्बन्धि-वाक्यद्वयेन लिखित्वा सप्टम्बर्-२० दिनाङ्कतः पूर्वम् एव प्रेषयन्तु। *अनन्तरम् आगताः शीर्षिकाः न परिशीलयिष्यामः। *स्पर्धायां विजेता ५०/- रूप्यकात्मकं पारितोषिकं प्राप्स्यति। *शीर्षिकाः समपत्रे (पोस्ट्-कार्ड्) लेखनीयाः। तत्र अन्यः विषयः न लेखनीयः। *अधोनिर्दिष्ट-सङ्केताय शीर्षिकाः प्रेषणीयाः—

**चन्दमामा (संस्कृतम्)**

**७३/२, 'अक्षरम्' रङ्गराव्मार्गः, शङ्करपुरम्, बेङ्गलूरु-५६०००४**

---

## 'जुलै' मासस्य चित्रशीर्षिकास्पर्धायाः परिणामः—

प्रथमचित्रम् - **वेदनासहने नितरां दक्षा।**

द्वितीयचित्रम् - **वायुपूरणे निरताप्यशक्ता।**

प्रेषिका - मैत्री, २०८, IV मुख्यमार्गः, १७ उपमार्गः, विद्यारण्यपुरं, मैसूरु-८, कर्णाटकम्।




Printed by B.V. REDDI at Prasad Process Private Ltd., 188 N.S.K. Salai, Madras 600 026 (India) and Published by B. VISHWANATHA REDDI on behalf of CHANDAMAMA PUBLICATIONS, Chandamama Buildings, Vadapalani, Madras 600 026 (India). Controlling Editor: NAGI REDDI.


---

# मम नाम कथं ज्ञातवान्?

| | |
|---|---|
| हरीशः – नमस्ते श्रीहरिमहोदय! | Hellow, Mr Shrihari! |
| श्रीहरिः – कः भवान्? मया भवतः परिचयः न प्राप्तः खलु ....? | May I know who you are? I am unable to recollect. |
| ह – अहम् अपि इतः पूर्वं भवन्तं न दृष्टवान्। | I too haven't seen you before. |
| श्री – तर्हि? | I see! |
| ह – भवतः हस्ते चारुदेवशास्त्रिणः वाग्व्यवहारादर्शनामकं पुस्तकं दृष्टवान्। तेन ज्ञातं यत् भवान् संस्कृतज्ञः व्यवहारासक्तः च इति। | I saw the book 'Vāgvyavahārādarsha' by Charudeva Shāstry in your hand. So I thought you should be knowing Samskrita and you should also be interested in conversing in it. |
| श्री – मम नाम कथं ज्ञातवान्? | All right, but how did you know my name? |
| ह – भवतः स्यूतस्य उपरि लिखितम् आसीत् – 'डा।। श्रीहरिः' इति। | The name-tag on your bag reveals it! |
| श्री – तीक्ष्णमतिः खलु भवान्! | Oh! you are very intelligent! |
| ह – जीवनं सर्वं ज्ञापयति। | These are life's lessons. |
| श्री – किं नाम भवतः? कुत्र गच्छन् अस्ति? | What is your name? Where are you going? |
| ह – हरीशः इति। बेङ्गलूरु गच्छन् अस्मि। तत्र मम आपणः अस्ति। संस्कृतपुस्तकानां विक्रयणं मम वृत्तिः। | My name is Harish. I am going to Bangalore. I have a book shop there. I sell Samskrita books. |
| श्री – निध्यञ्जनौषीधीमूलं खनता साधितो निधिः। अहम् अपि व्यवहारोपयोगीनि संस्कृतपुस्तकानि क्रेतुम् इच्छामि। | I have found the treasure trove I was looking for under my very nose! I would like to buy books on spoken Samskrita. |
| ह – तर्हि मम आपणम् अवश्यम् आगच्छतु। स्वीकरोतु, एतत् मम सङ्केतपत्रकम्। | Please do come then to my shop. Please keep this. It is my visiting card. |

रसप्रश्नाः –

# लङ्कायां प्रवेशः परिभ्रमणं च

[समुद्रम् उल्लङ्घ्य आञ्जनेयः लङ्कां प्राप्तवान्। तत्र लङ्काधिदेवतां पराजित्य अन्तः प्रविष्टवान्। सर्वत्र सीतान्वेषणं कृतवान् च। एतं सन्दर्भम् आधारीकृत्य अधः केचन प्रश्नाः सज्जीकृताः सन्ति। युक्तम् उत्तरं जानन्तु।]

I कस्यां दिशि हनूमान् लङ्कां प्रविष्टवान्?

१. उत्तरदिशि। २. पश्चिमदिशि। ३. दक्षिणदिशि।

II लङ्कानगरी कस्य शापात् ग्रस्ता आसीत्?

१. ईश्वरस्य शापात् २. नन्दिकेश्वरस्य शापात्। ३. ब्रह्मणः शापात्।

III 'यावत् वानरः भवतीं न जेष्यति तावत् नाशभीतिः नास्ति' इति केन वरः दत्तः?

१. ब्रह्मणा। २. विष्णुना। ३. नन्दिकेश्वरेण।

IV लङ्कादेवतां पराजित्य दुर्गभित्तिम् अतिक्रम्य हनूमान् कं पादं प्रथमं स्थापितवान्?

१. युगपत् पादद्वयम् अपि। २. दक्षिणपादम्। ३. वामपादम्।

V हनूमान् लङ्कां कदा प्रविष्टवान्?

१. प्रातः सूर्योदयसमये। २. सायं सूर्यास्तसमये।

३. अन्धकारप्रसारानन्तरं रात्रौ।

VI सीतान्वेषणतत्परः हनूमान् विविधावस्थासु सुप्तानां स्त्रीणां दर्शनात् आगतायाः पापशङ्कायाः विषये कथं मनःसमाधानं प्राप्तवान्?

१. मानवेतरस्य मम एषः न अधर्मः इति।

२. एतत्सन्दर्भे धर्माधर्मविचारः एव अनुचितः इति।

३. दृष्टवतः अपि मम मनः निष्कल्मषम् एव अस्ति इति।

उत्तराणि –

I–१. II–२. III–१. IV–३. V–३. VI–३.

A Super treat in every sweet!

SUPER SIZE!
SUPER TASTE!

nutrine
SuperStar
Premium toffees









TWIN TREAT
DELITE
TOP CREAM



Heavenly delights



nutrine भारत में सबसे ज़्यादा बिकनेवाला चॉकलेट

न्यूट्रीन कन्फ़ेक्शनरी कं.प्रा.लि., चित्तूर, आं.प्र.

NC/8636